निच ॥ ४८ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौव्रजप्रवेशोनामचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ छ ॥
आहूतोराधयाकृष्णःसंध्यायांनंदनंदनः ॥ जगामशश्वदेकांतेशीतलंकदलीवनं ॥ १ ॥ रंभादलैश्चंदनस्यपंकयुक्तंमनोहरं ॥ स्फारास्फुर
न्नभ्रगेहंयमुनावायुशीकरं ॥ २ ॥ एतादृशंराधिकायाःसुंदरंमेघमंदिरं ॥ सर्वदुःखाग्निनानित्यंभस्मीभूतंबभूवह ॥ ३ ॥ श्रीदामशापेननृ
पदुःखेनवृषभानुजा ॥ तनुंरक्षतितत्रापिकृष्णागमनहेतवे ॥ ४ ॥ निशम्यकृष्णंस्ववनेसमागतंसखीमुखाच्छ्रीवृषभानुनंदिनी ॥ आनेतु
मुत्थायवरासनात्त्वरंद्वारेसखीभिर्नृपसाजगामह ॥ ५ ॥ ददौह्यासनपाद्यार्घ्यानुपचारान्व्रजेश्वरी॥वदंतीकुशलंवाक्यंकृष्णाकृष्णंव्रजेश्वरं ॥
॥ ६ ॥ परिपूर्णतमंदृष्ट्वा परिपूर्णतमानृप ॥ जहौविरहजंदुःखंसंयोगेहर्षपूरिता ॥ ७ ॥ चकारस्वस्याशृंगारंवस्त्रालंकारचंदनैः ॥ कुशस्थ
ल्यांगतेनाथेशृंगारोनकृतस्तया ॥ ८ ॥ पुरातयानभुक्तंचतांबूलंमिष्टभोजनं ॥ कृतंनशय्याशयनंक्वचिद्धास्यंनवाकृतं ॥ ९ ॥ सिंहासने
स्थितंराधादेवंमदनमोहनं ॥ हर्षाश्रूणिप्रमुंचंतीजगौगद्गदयागिरा ॥१०॥ ॥ राधोवाच ॥ ॥गोकुलंमथुरांत्यक्त्वागतःकस्मात्कुशस्थलीं ॥
वदतन्मेहृषीकेशत्वंसाक्षाद्गोकुलेश्वर ॥ ११॥ क्षणंयुगसमंनाथजानामित्वद्वियोगतः ॥ घटीमन्वंतरसमांद्विपरार्द्धसमदिनं ॥ १२ ॥कस्मि
न्कालेविरहोमेबभूवचदुःखदः ॥ येनत्वच्चरणौदेवनद्रक्ष्यामिसुखप्रदौ ॥ १३ ॥ यथारामंतुसीतेवमानसंवरटेवच ॥ तथारासेश्वरंत्वांतुमा
नदांहिसमुत्सहे ॥ १४॥ सर्वंजानासिसर्वज्ञःकिंदुःखंकथयाम्यहं॥शतवर्षगतंनाथवियोगोनगतोमम ॥१५॥ इत्युक्त्वावचनंराजन्स्वामिनी
स्वामिनंपरं ॥ वियोगखिन्नादुःखानिस्मरंतीसारुरोदह ॥ १६ ॥ दृष्ट्वाप्रियांरुदंतींतांप्रियःप्राहप्रियंवचः ॥ तस्याश्चशमयन्वाक्यैःकृष्णःक
श्मलमेवच ॥ १७ ॥ ॥ श्रीकृष्णउवाच ॥ ॥ नकर्त्तव्यस्त्वयाराधेशोकश्चतनुशोषकः ॥ तेजश्चैकंद्विधाभूतमावयोर्ऋषयोविदुः ॥१८॥
यत्राहंत्वंसदातत्रयत्रत्वंह्यहमेवच ॥ वियोगआवयोर्नास्तिमायापुरुषयोर्यथा ॥ १९ ॥ भेदंहिचावयोर्मध्येयेपश्यंतिनराधमाः ॥ देहांतेन
रकान्राधेतेप्रयांतिस्वदोषतः ॥ २०॥ अथातस्त्वंतुमांराधेनित्यंद्रक्ष्यसिचांतिके ॥ प्रभातेचक्रवाकीवचक्रवाकंप्रियंकरं ॥ २१ ॥ किंचि
त्कालेनदयितेगोपगोपीभिरेवच ॥ साकंत्वयाऽक्षरंब्रह्मश्रीगोलोकंव्रजाम्यहं ॥ २२ ॥ ॥ गर्गउवाच ॥ ॥ माधवस्यवचःश्रुत्वागोपी

भिःसहराधिका ॥ प्रसन्नापूजयामासरमेशंचरमायथा ॥२३॥ श्रीराधयापुनःकृष्णोरासार्थंप्रार्थितोनृप ॥ प्रसन्नोवृंदकारण्येरासंकर्तुंमनो दधे ॥ २४ ॥ ॥ इति श्रीगर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौराधाकृष्णमीलनंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ गर्गउवाच ॥ ॥ हेमंतेमासिपूर्वस्मिन्राकायांराधिकेश्वरः ॥ वंशीवशकरींदध्मौयथावृंदावनेपुरा ॥ १ ॥ ध्वनिर्बभूवतस्याश्चसर्वेषामाहरन्मनः ॥ निशम्यगोप्यःसंखिन्नाःकामखेदेनतत्रसुः ॥ २ ॥ रुंधन्नंबुभृतश्चमत्कृतिपरंकुर्वन्मुहुस्तुंबरं ध्यानाद्धंतनयन्सनंदनमुखान्विस्मे रयन्वेधसं ॥ औत्सुक्याद्बलिभिर्बलिंचटुलयन्भोगींद्रमाघूर्णयन्भिंदन्नंडकटाहभित्तिमभितोबभ्रामवंशीध्वनिः ॥ ३ ॥ अथोदगाच्चंद्र मास्तुचर्षणीनांशुचोमृजन् ॥ यथाप्रियायाराजेंद्रविदेशादागतप्रियः ॥ ४ ॥ तदैवयमुनाराजंस्तनुंदिव्यंदधारह॥ वृंदावनंगिरींद्रश्चव्रजभू मिश्चमानद ॥ ५ ॥ कृष्णानदीजयतियत्रमणींद्रमुक्तामाणिक्यशुभ्रहरिताकरतोलिकाभिः ॥ वैडूर्यनीलकहरिद्धरिवज्रपीतसोपानमंडप युताभिरतिस्फुरंती ॥ ६ ॥ स्वच्छंदसूत्पतितमत्स्यगणैर्वहंतीसच्छचामलेनवपुषाऽघगणंहरंती ॥ उत्तुंगलोललहरीकमलैर्लसंतीकृष्णा नदीजयतिकृष्णगृहेलुठंती ॥ ७ ॥ गोवर्द्धनंभजगिरिंशतचंद्रयुक्तंमंदारचंदनलतावृतकल्पवृक्षं ॥ श्रीरासमंडलयुतंमणिमंडपाढ्यंकोटी रमंजुलनिकुंजकुटीरकोटिं ॥८॥ वृंदावनंचयमुनातटनीरतीरसंपृक्तमंदगमनैरतिगंधवातैः॥ तत्कंपितंचसुरभीकृतसर्वदेशंश्रीखंडकुंकुम मृदागुरुचर्चितंशं ॥ ९ ॥ जुष्टंवसंतनवपल्लवपुष्परंगैर्मंदारचंदनसुचंपकनीपनिंबैः ॥ आम्रातकाम्रपनसागुरुनागरंगैःश्रीतालपिप्पलवटै र्नवनारिकेरैः ॥ १० ॥ खर्जूरश्रीफललवंगविराजमानमंजीरशालकतमालकदंबयुक्तं ॥ संतानकुंदबदरीकदलीसिताढ्यंश्रीशाल्मलीबकु लकेतकिसत्सिरीषं॥११॥सन्मोदिनीजलजवृंदमनोहराभंवृंदारकंवरवनंतुलसीलताढ्यं ॥ श्रीमल्लिकाऽमृतलतामधुमाधवीभिःसंराजितं स्मरनृपेंद्रव्रजस्यमध्ये ॥१२॥ वंशीवटंचकलकंठविहंगमैश्चकृष्णातटेचपुलिनंकिलवालुकाढ्यं ॥ श्रीपाटलैर्मधुककिंशुकसत्प्रियालैरौदुं बरैःक्रमुकद्राक्षकपित्थयुक्तं ॥१३॥ श्रीकोविदारपिचुमंदलतार्जुनैश्चप्लक्षैरशोकसरलैःसुरदारुभिश्च ॥ जंबूसुवेत्रनलकुब्जकस्वर्णयूथीपुन्नाग नागकुटजैःकुरवैर्वृतंच ॥ १० ॥ चक्राव्हसारसशुकैःसितराजहंसैः कारंडवैश्चजलकुक्कुटकूजितंच ॥ ११ ॥ दात्यूहकोकिलकपोतक

नीलकंठैर्नृत्यन्मयूरकलराववृतंस्मरत्वं ॥ १२ ॥ श्यामाचकोरकलखंजनसारिकाभिःपारावतैर्भ्रमरतित्तिरतित्तिरीभिः ॥ श्रीकांचनीय
धुलतामधुयूथिकाभिःसंवेष्टितंहरिणमर्कटमर्कटीभिः ॥ १३ ॥ श्रीपद्मरागशिखरंचनिकुंजगेहंश्रीकौस्तुभेंद्रमणिराजिविराजमानं ॥ को
टींदुमंडलवितानगणैश्चहेमैःश्रीपट्टसूत्ररचितैर्मणितोरणाढ्यम्॥१४ ॥ मुक्तावृतैःकनकपीतपतत्पताकैःपारावतैःसितपतत्रिभिरावृतंच॥
मंदारकुंदकरवीरकयूथिकानांमालाविचित्ररचितंनवचंपकानां ॥ १५ ॥ नागेशपद्महरिचंदनपल्लवानांश्रीमालतीकुरवकांचनयूथिकानां
मालाभिरावृतमनंगहरंगृहंतत्सद्रत्नदर्पणवृतंसितचामरैश्च ॥१६ ॥ सिंहासनैश्चनवपल्लवपुष्पयुक्तैःशय्यासनैःकनकविद्रुमपादवृंदैः ॥ श्री
चंदनागुरुजलैर्मकरंदसंघैःकस्तूरिकामुदितकुंकुमचर्चितंतत् ॥ १७ ॥ एजद्वसंततरुपल्लवमेववातैःशीतैर्गजेंद्रगमनैःसुरभीकृतांगं ॥
एतादृशंहरिनिकुंजगृहंस्मरत्वंसन्नम्रशाखतरुयुक्तमतीवपुष्पैः ॥ १८ ॥ श्रीवेणुगीतंवहुकामवर्द्धनंनिशम्यसर्वाव्रजयोषितोनृप ॥ श्रीकृ
ष्णकांतेनगृहीतमानसाविसृज्यकर्माणिसमाययुर्वने ॥ १९ ॥ रुद्धायाःपतिभीराजन्कृष्णेनहृतमानसाः ॥ स्थूलंशरीरंतास्त्यक्त्वात्वरंकृ
ष्णांतिकंययुः ॥ २१॥ सिंहासनेहेमदुकूलसंयुतेमध्येस्थितंसुंदरनंदनंदनं ॥ श्रीसुंदरीराधिकयासमंपरंगलेदधानंमधुमालतीस्रजं ॥२० ॥
श्यामंप्रभातार्ककिरीटिनंहरिंस्फुरत्प्रभंश्रीमुरलीमनोहरं ॥ पीतांबरंमन्मथराशिमोहनंव्रजस्त्रियस्तंददृशुःसमागताः ॥ २२ ॥ दृष्ट्वाप्रिया
प्रियतमंमत्स्यकुंडलिनंहरिं ॥ गोप्योमूर्च्छांगताःसद्योभूपचालक्षितोद्यमाः ॥ २३॥ सांत्वयामासताःकृष्णोमिष्टवाक्यैःसुधासमैः ॥ तदा
गोप्योवनोद्देशेसर्वाश्चैतन्यतांगताः ॥२४॥कृष्णांगद्दद्याावाचास्तुत्वाभीतास्त्रियोवराः ॥ त्यक्त्वाविरहजंदुःखंगोविंदंददृशुःप्रियं ॥२५ ॥
वृंदावनेभ्राजमानेमालतीवनसंकुले ॥ दिव्यद्रुमलताजालेमधुपध्वनिनादिते ॥ २६ ॥ विचचारहरिःसाक्षाद्देवोमदनमोहनः ॥ पद्माभंपद्म
हस्तेनगृहीत्वाराधिकाकरं ॥२७॥ प्रहसन्भगवान्साक्षादाययौयमुनातटं ॥ कृष्णातीरेनिकुंजेवैश्रीकृष्णोनिषसादह ॥ २८ ॥ तस्मिन्गृहे
मधुपतेःशृणुगोपिकानांश्रीकृष्णचंद्रचरणस्मरणावृतानां ॥ झंकारनूपुरझणत्करकंकणानांमंजीररत्नविचलत्कटिकिंकिणीनां ॥ २९ ॥
स्मेरद्युतिस्फुटचमत्कृतगंडदेशैःश्रीदंतपंक्तिविलसत्तडिदालिवेशैः ॥ कोटीरहारहरिदंगदभूषितानांबालार्कमंडलविकुंडलमंडितानां ॥

॥ ३० ॥ तासांतुकापियुवतीकथिताचमुग्धामध्यापिकापितरुणीरुचिराप्रगल्भा ॥ काचित्तरुंविनयतीमधुरंहसंतीकाचित्सखीमदयुता सुवनेव्रजंती॥३१॥संताडयतामपिकरेणतुकाप्यधावत्संगृह्यकापिभुवनेकमलैर्जघान ॥ काचिच्छूलथत्कनकहारमुपाजहारकाचित्प्रमुक्त कबरीतुविहारमत्ता ॥ ३२ ॥ श्रीजान्हवीचयमुनामधुमाधवीचशीलारमाशशिमुखीविरजासुशीला ॥ चंद्राननाचललितात्वचलाविशा खामायाऽऽल्यएवकथिताभवनेत्वसंख्याः ॥ ३३ ॥ लीलातपत्रमतिमौक्तिकदामजालंनीत्वाचलंतिमणिभूमिषुतत्रकाश्चित् ॥ श्रीचामर व्यजनदंडधरावयस्यःकाश्चिद्व्रजंतिधृतपीतपतत्पताकाः ॥ ३४ ॥ नृत्यंतितत्रहरिवेषधरास्तुकाश्चिद्वीणाकरामधुरतालमृदंगहस्ताः ॥ वंशीधराश्चवृषभानुसुताःसुवेषाःकेयूरकुंडलयुतामणिवेत्रहस्ताः ॥३५॥ सद्भावभावरसतालयुतस्मिताक्तैर्झंकरनूपुरयुतैर्विशदैःकटाक्षैः॥ संगीतनृत्यविदितैर्भृकुटीविभंगैराधांहरिंचसततंपरितोषयंत्यः ॥ ३६ ॥ तस्मिन्निकुंजभवनेयमुनातटेपिवंशीवटेवनधरानिकटेहरिंतं ॥ श्रीराधयाचगिरिराजतटंव्रजंतंनंदात्मजंचनटवेषधरंस्मरत्वं ॥ ३७ ॥ श्रीपद्मरागनखदीप्तिपदारविंदंझंकारिनूपुरधरंस्फुरदंगदेशं ॥ कुर्वं तमेवतुपदाऽरुणभूमिदेशंश्रीमत्परागसुरुचालमितस्ततस्तु ॥ ३८ ॥ लक्ष्मीकराब्जपरिलालितजानुदेशंरंभोरुपोतवसनंतुकृशोदराभं ॥ रोमावलिभ्रमरनाभिसरास्त्रिरेखंकांचीधरंभृगुपदंमणिकौस्तुभाढ्यं ॥ ३९ ॥ श्रीवत्सहाररुचिरंनवमेघनीलंपीतांबरंकरिकरस्फुटबाहुदंडं ॥ रत्नांगदंचमणिकंकणपद्महस्तंश्रीराजहंसवरकंधरशोभिमानं ॥ ४० ॥ श्रीकंबुकंठललितंविलसत्कपोलंमध्यंतुनिम्नचिबुकंकिलकुंद दंतं ॥ बिंबाधरंस्मितलसच्छुकचंचुनासंपीयूषकल्पवचनंप्रचलत्कटाक्षं ॥ ४१ ॥ श्रीपुंडरीकदलनेत्रमनंगलीलंभ्रूमंडलस्मितगुणावृत कामचापं ॥ विद्युच्छटोच्छालितरत्नकिरीटकोटिंमार्तंडमंडलविकुंडलमंडिताभं ॥ ४२ ॥ वंशीधरंत्वहिविलोलगुडालकाढ्यंराधापतिंस जलपद्ममुखंचलंतं ॥ कंदर्पकोटिघनमानहरंकृशांगवंशीवटेनटवरंभजसर्वथात्वं ॥ ४३ ॥ आरक्तरत्ननखचंद्रपदाब्जशोभांमंजीरनूपुररण त्कटिकिंकिणीकां॥श्रीघंटिकाकनककंकणशब्दयुक्तांराधांदधामितरुपुंजनिकुंजमध्ये॥४४॥नीलांबरैःकनकरश्मितटस्फुरद्भिःश्रीभानु जातटमरुद्भतिचंचलांगैः ॥ सूक्ष्मस्वरूपललितैरतिगौरवर्णांरासेश्वरींभजमनोहरमंदहासां ॥ ४५ ॥ बालार्कमंडलमहांगदरत्नहारांताटं

कतोरणमणींद्रमनोहराभां ॥ श्रीकंठभालसुमनोनवपंचदाम्नींरत्नांगुलीयललितांव्रजराजपत्नीं ॥ ४६ ॥ चूडामणिद्युतिलसन्स्फुरदर्द्धचं द्रांग्रैवेयकालपनपत्रविचित्ररूपां ॥ श्रीपट्टसूत्रमणिपट्टचलद्विदाम्नींस्फूर्ज्जत्सहस्रदलपद्मवरांभजस्व ॥ ४७ ॥ श्रीबाहुकंकणलसत्कुचर त्नदीप्तिश्रीनासिकाभरणभूषितगंडदेशां ॥ सद्यौवनालसगतिंकलसर्पवेणींसंध्येंदुकोटिवदनांस्फुटचंपकाभां ॥ ४८ ॥ सद्भावभावसहितां नवपद्मनेत्रांस्फूर्ज्जत्स्मितद्युतिकलांप्रचलत्कटाक्षां ॥ कृष्णप्रियांललितकुंतलपुंतलाभांमंदारहारमधुरभ्रमरीरवाढ्यां ॥ ५९ ॥ श्रीखंड कुंकुममृदागुरुवारिसिक्तांश्रीबिंदुकीरुचिरपत्रविचित्रचित्रां ॥ संतानपत्ररुचिरामलमंजनाभांरासेश्वरींगजगतिंभजपद्मिनीतां ॥ ५० ॥ ए ताहृशींरतिवरांतुसमेत्यकृष्णोगच्छन्निकुंजवनजालविलोकनाय ॥ धावंतितत्रमणिछत्रधराश्चगोप्योनीत्वातथाचमरचारुपतत्पताकान् ॥ ॥ ५१ ॥ षड्रागमेववरधैवतमध्यमाद्यैर्गायंतमादिपुरुषंभजनंदपुत्रं ॥ षट्त्रिंशतस्तदनुवर्त्तितरागिणीनांवंशीरवेणललितेनवरंव्रजंतं ॥ ॥ ५२ ॥ शृंगारवीरकरुणाद्भुतहास्यरौद्रबीभत्सशांतकभयानकनित्ययुक्तं ॥ भक्तप्रियंव्रजवधूमुखपद्मभृंगंयोगींद्रहृत्कमलविस्फुरदंघ्रि युग्मं ॥ ५३ ॥ क्षेत्रज्ञमादिपुरुषंस्वधियज्ञरूपंसर्वेश्वरंसकलकारणकारणेशं ॥ कृष्णंहरिंप्रकृतिपूरुषयोःपुमांसंसर्वनिरस्तकपटंनिजतेज सेह ॥ ५४॥ यंवैस्तुवंतिशिवधर्मसुरेशशेषलोकेशसिद्धिदगणेशसुरादयोपि ॥ राधारमाप्रकृतिभूविरजास्वराद्यावेदाभजंतिसततंतमहंभ जामि ॥ ५५॥ इति श्रीगर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौरासक्रीडायांद्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ छ॥

॥ गर्गउवाच ॥ ॥ वृंदावनेवृक्षलतालिसंकुलेमंदानिलेवीजतिशीतलेनृपे ॥ रंध्राणिवेणोःकिलपूरयन्हरिर्मुहुर्हरत्येवदिवौकसांमनः ॥१॥ वेणुगीतंततःश्रुत्वाश्रीराधाकीर्तिनंदिनी ॥ भुजाभ्यांनंदसूनुंवैजग्राहानंगविह्वला ॥ २ ॥ गोकुलस्यचकोरींतांकृष्णोगोकुलचंद्रमाः ॥ दृष्ट्वाकुसुमपर्यंकेतयारेमेहरन्मनः ॥ ३ ॥ श्रीकृष्णस्यविहारेणब्रह्मानंदेनस्वामिनी ॥ मुदंलेभेमहात्यंतंतथास्वामीवशीकृतः ॥ ४ ॥ रम णीयंरतिकरंरासेरामारमेश्वरं ॥ जगृहुःसर्वतोराजन्शतयूथाश्चयोषितः ॥ ५ ॥ ताभिःसार्द्धंहरीरम्योरेमेवैरासमंडले ॥ तावद्रूपधरोराज न्यावत्योव्रजयोषितः ॥ ६॥ विहरिण्यश्चताःसर्वाविहारेणविहारिणः ॥ ब्रह्मानंदेनसन्मत्यांआनंदंलेभिरेयथा ॥७॥ श्रीकराभ्यांश्रीकराभ्यां

श्रीशः श्रीश्यामसुंदरः ॥ दधारहृदयेसर्वास्ताभिर्भक्त्यावशीकृतः ॥ ८ ॥ स्वेदयुक्तान्याननानितासांप्रीत्याव्रजेश्वरः ॥ प्रामृजत्पीतवस्त्रेण
किंवदामितपःफलं ॥ ९ ॥ विनासांख्येनयोगेनतपसाश्रवणेनच ॥ विनातीर्थैर्नदानेनप्राप्ताःकामेनताहरिं ॥ १० ॥ ततोगोपीजनाःसव
मानवत्यःपरस्परं ॥ कुवाक्यंकथयामासुःकृष्णतृप्ताविहारतः ॥ ११ ॥ अस्माँस्त्यक्त्वापुराकृष्णोगतःश्रीमथुरांपुरीं ॥ विलोकितुंरूपिणी
श्चसुंदरीःस्त्रीश्चसुंदरः ॥ १२ ॥ नदृष्टास्तेनसुंदर्योजगामद्वारकांपुनः ॥ नदृष्टास्तेनतास्तत्रविवाहंकृतवान्पुनः ॥ १३ ॥ रुक्मिणींभीष्म
कसुतांनमत्वातांतुरूपिणीं ॥ पुनर्विवाहान्कृतवान्सहस्राणिचषोडश ॥ १४ ॥ नमत्वारूपिणीस्ताश्चशोकंकुर्वन्पुनःपुनः ॥ व्रजमागतवान्स
ख्यःश्रीकृष्णोऽस्मान्विलोकितुं ॥ १५ ॥ दृष्ट्वारूपाणिचास्माकंसर्वद्रष्टारमेश्वरः ॥ प्रसन्नोभूत्तथासख्योयथारासेहरिःपुरा ॥ १६ ॥ त
स्माद्वयंचसर्वासांसुंदरीणांवराःस्मृताः ॥ सुनेत्राश्चंद्रवदनाःशश्वत्सुस्थिरयौवनाः ॥ १७ ॥ अस्मत्तुल्याश्चरूपिण्योनैवदेवांगनाश्चखे ॥
याभिःशीघ्रंकटाक्षैश्चकृष्णःकामीवशीकृतः ॥ १८ ॥ अहोवैयेनहंसेनमुक्ताःपूर्वंप्रभक्षिताः ॥ सएवान्यत्कथंवस्तुभक्षयिष्यतिदुःखतः ॥
॥ १९ ॥ नसंतिमुक्ताःसर्वत्रसंतिमानसरोवरे ॥ तथावरास्त्रियोभूमौनसंतिसंतिचात्रहि ॥ २० ॥ ॥ गर्गउवाच ॥ ॥ इतिमानवतीनां
चस्वात्मारामोजगत्पतिः ॥ वचःशृण्वन्राधयाचतत्रैवांतरधीयत ॥ २१ ॥ निर्द्धनोपिधनंलब्ध्वामानंप्रकुरुतेनृप ॥ यस्यनारायणःप्राप्तोत
स्यकिंकथयाम्यहं ॥ २२ ॥ ॥ इति श्रीमद्गर्गाचार्यसंहितायांहयमेधचरित्रेसुमेरौरासक्रीडायांत्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

॥ वज्रनाभिरुवाच ॥ ॥ अद्भुतंकृष्णचरितंमयात्वन्मुखतःश्रुतं ॥ किंचक्रुर्गोपिकास्तासांसकथंदर्शनंददौ ॥ १ ॥ तत्सर्वंमुनिशार्दूल
मह्यंश्रद्धालवेवद ॥ धन्यास्तेयेहिशृण्वंतिकर्णैःकृष्णकथांसदा ॥ २ ॥ मुखेनकृष्णचंद्रस्यनामानिप्रजपंतिहि ॥ हस्तैःश्रीकृष्णसेवांवैयेप्रकु
र्वंतिनित्यशः ॥ ३ ॥ नित्यंकुर्वंतिकृष्णस्यध्यानंदर्शनमेवच ॥ पादोदकंप्रसादंचयेप्रभुंजंतिनित्यशः ॥ ४ ॥ इतीदृशेनभावेनश्रमेणजग
दीश्वरं ॥ येभजंतिमुनिश्रेष्ठतेप्रयांतिहरेःपदं ॥ ५ ॥ संसारेयेप्रभुंजंतिभोगान्नानाविधान्मुने ॥ श्रवणादीन्नकुर्वंतिदेहसौख्येनदुर्मदाः ॥ ६ ॥
तेचांतेयमदूतैश्चगृहीताश्चभयानकैः ॥ पतिताःकालसूत्रेवैयावद्रविनिशाकरौ ॥ ७ ॥ ॥ सूतउवाच ॥ ॥ इत्युक्तवंतंराजानंप्रत्युवा

चमुनोश्वरः ॥ गद्गदस्वरयावाण्याप्रशंस्यचरितंहरेः ॥ ८ ॥ ॥ गर्गउवाच ॥ ॥ कृष्णेचांतर्हितेराजंस्त्वरंसर्वाश्चगोपिकाः ॥ अचक्षा
णाश्चतंतप्ताःहरिण्योहरिणंयथा ॥ ९ ॥ अंतर्हितंहरिंज्ञात्वागोप्यःसर्वाश्चपूर्ववत् ॥ यूथीभूताविचिक्युर्वैसर्वतस्तंवनेवने ॥ १० ॥ पप्रच्छुर्भू
रुहान्सर्वान्मिलित्वातुपरस्परं ॥ हत्वाह्यस्मान्कटाक्षेणक्वगतोनंदनंदनः ॥ ११ ॥ तदस्माकंचवदतयूयंसर्वेवनेश्वराः ॥ मार्त्तंडकन्येत्वंजि
रेगोपालोगाश्चचारयन् ॥ १२ ॥ नित्यंचकारलीलांतुसगतःकुत्रनोवद ॥ शतशृंगगिरींद्रस्त्वंश्रीनाथेनधृतःपुरा ॥ १३ ॥ वामहस्तेरक्ष
णार्थवासवाद्व्रजवासिनां ॥ नजहातिहरिस्त्वांतुस्वपुत्रंहृदयोद्भवं ॥ १४ ॥ सगतोवदकुत्रास्तेविहायविपिनेचनः ॥ हेमयूराश्चहरिणाहेगा
वोहेमृगाःखगाः ॥ १५ ॥ किरीटीह्यलकीकृष्णोयुष्माभिःकिंविलोकितः ॥ वदंतसोपिकुत्रास्तेवनेकस्मिन्मनोहरः ॥ १६ ॥ एतैस्तु
वाक्यैःसंपृष्टाःकठिनास्तीर्थवासिनः ॥ उत्तरंनैवदास्यंतिसर्वेतेमोहिताःकिल ॥ १७ ॥ ॥ गर्गउवाच ॥ ॥ एवंसर्वाहिपृच्छंत्यःकृ
ष्णचंद्रंवनेवने ॥ वदंत्यःकृष्णकृष्णेतिबभूवुस्तन्मयास्ततः ॥ १८ ॥ चक्रुःकृष्णचरित्राणितत्रकृष्णमयाःस्त्रियः ॥ यमुनावालुकायांचपदा
निददृशुर्हरेः ॥ १९ ॥ वज्रध्वजांकुशाद्यैश्चचिन्हितानिमहात्मनः ॥ तत्पदान्यनुसारेणपश्यंतःप्रययुस्त्वरं ॥ २० ॥ कृष्णांघ्रिरेणवोनीत्वा
मूर्ध्निधृत्वाव्रजस्त्रियः ॥ पदान्यन्यानिददृशुश्चान्याचिन्हयुतानिहि ॥ २१ ॥ निरीक्ष्याहुःप्रियासार्द्धंगतःप्रियतमोह्यसौ ॥ एवंवदंत्यःपश्यन्त्यो
गोप्यस्तालवनंगताः ॥ २२ ॥ व्रजन्नग्रेव्रजेंद्रस्तुव्रजेश्वयांव्रजेनृप ॥ कोलाहलंचगोपीनांश्रुत्वाप्रत्याहस्वामिनी ॥ २३ ॥ शीघ्रंगच्छप्रि
येत्वंतुकोटिचंद्रसमप्रभे ॥ आगताव्रजनार्योहिनेतुंत्वांमांचसर्वतः ॥ २४ ॥ ततःप्रियाहरेःपूर्वंशृंगारंकुसुमैर्नृप ॥ चकारसुंदरंदिव्यंवृंदारण्ये
चपूर्ववत् ॥ २५ ॥ नंदसूनुःप्रियायाश्चदिव्यंशृंगारमेवच ॥ चकारबहुभिःपुष्पैर्भांडीरेचयथापुरा ॥ २६ ॥ केशप्रसाधनाद्यैश्चस्रक्तां
बूलानुलेपनैः ॥ सुंदरीसुदरेणापिबभूवात्यंतसुंदरी ॥ २७ ॥ ततःकृष्णस्तुमुदितःपुष्पवृक्षतलेनृप ॥ शय्यांपुष्पमयींकृत्वातयारेमेरमे
श्वरः ॥ २८ ॥ वृंदावनेगोवर्द्धनेकृष्णायाःपुलिनेतथा ॥ नंदीश्वरेबृहत्सानौतथारोहितपर्वते ॥ २९ ॥ अरण्येषुद्वादशसुसर्वत्रव्रजमंडले ॥
कांतयाविचरन्कांतोवंशीवटतलेस्थितः ॥ ३० ॥ तत्रशुश्रावगोपीनांवदंतीनांरवंपरं ॥ स्वामिन्यासहराजेंद्रश्रीगोपीजनवल्लभः ॥ ३१ ॥

पुनःप्राहप्रियांप्रेम्णागच्छगच्छप्रियेत्वरं ॥ कृष्णवाक्यंततःश्रुत्वाप्राहभूत्वाचमानिनी ॥ ३२ ॥ ॥ राधोवाच ॥ ॥ नसमर्थाप्रचलितुंकु
चिद्देहान्ननिर्गता ॥नयमांतेमनोयत्रदुर्बलांदीनवत्सल ॥ ३३ ॥ इतितद्वाक्यमाकर्ण्यरामांरामानुजस्ततः ॥ स्वेनपीतांबरेणापिवीजयामास
स्वेदतः ॥ ३४ ॥ प्रगृह्यपाणिनाप्राहसर्पराज्ञियथासुखं ॥ इतिसाहरिणाप्रोक्तामत्वात्मानंवरंपरं ॥ ३५ ॥ हित्वासौस्त्रीजनान्नात्रौभजतेमां
रहःस्थले ॥ इतिमत्वातुहरयेभूत्वातूष्णींव्रजेश्वरी ॥ ३६ ॥ वस्त्रेणाननमाच्छाद्यपृष्ठंदत्वास्थिताभवत् ॥ पुनराहहरिस्तांतुप्रियेगच्छमद्
यासह ॥ ३७ ॥ भजामित्वामहंभद्रेवियोगात्तांतुशापतः ॥ विहायगोपीःसर्वाश्चलग्नास्त्वांतुभजाम्यहं ॥ ३८ ॥ त्वंतुमेस्कंधमारुह्यसुखं
व्रजरहःस्थले ॥ इत्युक्तामानिनींमानीस्कंधयानमभीप्सतीम् ॥ ३९ ॥ त्यक्त्वाह्यंतर्दधेराजन्स्वात्मारामःस्वलीलया ॥अंतर्हितेभगवति
सहसासावधूर्नृप ॥ ४० ॥ अन्वतप्यतदुःखात्तांगतमानारुरोदह ॥ ततस्तद्रोदनंश्रुत्वावंशीवटतटेत्वरं ॥ ४१ ॥ आजग्मुर्गोपिकाःसर्वा
ददृशुस्तांचदुःखितां ॥ चक्रुःस्त्रियस्तदंगेषुवायुंव्यजनचामरैः ॥ ४२ ॥ स्नापयीत्वातुतांप्रेम्णाकाश्मीरसलिलेनच ॥ सिषिचुर्मकरंदैस्तां
चंदनद्रवशीकरैः ॥ ४३ ॥ पुनर्वाक्यैःसमाश्वास्यगोप्यःकर्मसुकोविदाः॥ निशम्यतन्मुखाद्यानंगोविंदस्यचमानतः ॥ ४४ ॥ मानिन्यो
गोपिकाःसर्वाविस्मयंपरमंययुः॥ विहायमानंताःसर्वाआगत्यपुलिनंनृप ॥ स्वरैर्जगुःकृष्णगुणास्तदागमनहेतवे ॥ ४५ ॥ ॥ इति
श्रीगर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौरासक्रीडायांचतुश्चत्वारिंशोऽध्याय ॥ ४४ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ गोप्यऊचुः ॥ ॥ अधरबिंबविडंबितविद्रुमंमधुरवेणुनिनादविनोदितं ॥ कमलकोमलनीलमुखांबुजंतमपिगोपकुमारमुपास्महे ॥१॥
श्यामलंविपिनकेलिलंपटंकोमलंकमलपत्रलोचनं ॥ कामदंव्रजविलासिनीदृशांशीतलंमतिहरंभजामहे ॥ २ ॥ तंविसंचलितलोचनां
चलंसामिकुङ्मलितकोमलाधरं॥वंशवल्गितकरांगुलीमुखंवेणुनादरसिकंभजामहे ॥३॥ ईषदंकुरितदंतकुंडलंभूषणंभुवनमंगलश्रियं ॥घो
षसौरभमनोहरंहरेर्वेषमेवमृगयामहेवयं ॥४॥ अस्तुनित्यमरविंदलोचनःश्रेयसेहितुसुरार्चिताकृतिः ॥ यस्यपादसरसीरुहामृतंसेव्यमानम
निशंमुनीश्वरैः ॥ ५ ॥ गोपकैरचितमल्लसंगरंसंगरेजितविदग्धयौवनं ॥ चिंतयामिमनसासदैवतंदैवतंनिखिलयोगिनामपि ॥ ६ ॥ उल्लसन्न

वपयोदमेवतंफुल्लतामरसलोचनांचलं ॥ बल्लवीहृदयपश्यतोहरंपल्लवाधरमुपास्महेवयं ॥ ७ ॥ यद्धनंजयरथस्यमंडनंखंडनंतदपिसंचितैन
साम् ॥ जीवनंश्रुतिगिरांसदामलंश्यामलंमनसिमेस्तुतन्महः ॥८॥ गोपिकास्तनविलोललोचनप्रांतलोचनपरंपरावृतं ॥ बालकेलिरसला
लसंभ्रमंमाधवंतमनिशंविभावये ॥ ९ ॥ नीलकंठकृतपिच्छशेखरंनीलमेघतुलितांगवैभवं ॥ नीलपंकजपलाशलोचनंनीलकुंतलधरंभजा
महे ॥ १० ॥ घोषयोषिदनुगीतवैभवंकोमलस्वरितवेणुनिःस्वनं ॥ सारभूतमभिरामसंपदांधामतामरसलोचनंभजे ॥ ११ ॥ मोहनंमन
सिशार्ङ्गिणंपरंनिर्गतांकिलविहायमानिनीः ॥ नारदादिमुनिभिश्चसेवितंनंदगोपतनयंभजामहे ॥ १२ ॥ श्रीहरिस्तुरमणीभिरावृतोयस्तुवै
जयतिरासमंडले ॥ राधयासहवनेचदुःखितास्तंप्रियंहिमृगयामहेवयं ॥ १३ ॥ देवदेवव्रजराजनंदनदेहिदर्शनमलंचनोहरे ॥ सर्वदुःखहर
णंचपूर्ववत्संनिरीक्ष्यतवशुल्कदासिकाः ॥ १४ ॥ क्षितितलोद्धरणायदधारयःसकलयज्ञवराहवपुःपरं ॥ दितिसुतंविददारचदंष्ट्रयासतु
सदोद्धरणायक्षमोस्तुनः ॥१५॥ मनुमपाद्द्विजोदिविजैःसहवसुदुदोहधरामपियःपृथुः ॥ श्रुतिमपाद्धृतमत्स्यवपुःपरंसशरणंकिलनोस्त्वशु
भक्षणे ॥ १६ ॥ अवहदब्धिमहोगिरिमूर्जितंकमठरूपधरःपरमस्तुयः ॥ असुहरंनृहरिःसमदंडयत्सचहरिःपरमंशरणंचनः ॥ १७ ॥ नृप
बलिंच्छलयन्दलयन्नरीन्मुनिजनाननुगृह्यचचारयः ॥ कुरुपुरंचहलेनविकर्षयन्यदुवरःसगतिर्ममसर्वथा ॥ १८ ॥ व्रजपशून्गिरिराजमथोद्ध
रन्व्रजपगोपजनंचजुगोपयः ॥ द्रुपदराजसुतांकुरुकश्मलाद्ववतुतच्चरणाब्जरतिश्चनः ॥ १९ ॥ विषमहाग्निमहास्त्रविपद्गणात्सकलपांडुसु
ताःपरिरक्षिताः ॥ यदुवरेणपरेणचयेनवैभवतुतच्चरणःशरणंचनः ॥ २० ॥ मालांबर्हिमनोज्ञकुंतलभरांवन्यप्रसूनोषितांशैलेयागुरुक्लृ
प्तचित्रतिलकांशश्वन्मनोहारिणीम् ॥ लीलावेणुरवामृतैकरसिकांलावण्यलक्ष्मीमयींबालांबालतमालनीलवपुषंवंदामहेदेवतां॥२१ ॥ गर्ग
उवाच ॥ ॥ इतिस्त्रीभीरुदंतीभिरेवतीरमणानुजः ॥ आविर्बभूवचाहूतोतासांमध्येचभक्तितः ॥ २२ ॥ ॥ इति श्रीमद्गर्गाचार्य
संहितायांहयमेधचरित्रसुमेरौरासक्रीडायांकृष्णागमनंनामपंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ गर्गउवाच ॥ कृष्णंसमागतंदृष्ट्वाताःसमुत्थायहर्षिताः ॥ चक्रुर्जयजयारावंगोप्योदुःखंविसृज्यच ॥ १ ॥ दृष्ट्वासंमूर्छितांराधांगोपीभिः

र्थितोहरिः ॥ चैतन्यार्थंव्रजेतत्रचकारमुरलीरवं ॥ २ ॥ नोत्थितांराधिकांदृष्ट्वाश्रीराधांवल्लभोहरिः॥तस्यैसंश्रावयामासवेणुगीतंपुनःपुनः ॥ ३ ॥ ततःसमुत्थिताराधास्मृत्वादुःखंवियोगजं ॥ बभूवमूर्च्छितराजन्माधवस्यप्रपश्यतः ॥ ४ ॥ ततःकृष्णस्यवचनात्सद्यश्चंद्राननासखी ॥ चंद्रावलींप्रत्युवाचप्रसन्नाकृष्णवेणुना ॥ ५ ॥ ॥ चंद्राननोवाच ॥ ॥ कृष्णचंद्रःपुरानिर्गतोमानतांगतःसोपिराधेयुगांतेपुनः ॥ नाशयन्सर्वदुःखानितेसन्निधौसंजगौवेणुनादेवकीनंदनः ॥६॥ ह्रुंगह्रुंगेनिनादंमृदंगेकलंवाद्यमानेसुरस्त्रीजनैःसेवितः ॥ रासरम्यांगणेनृत्यकृन्माधवःसंजगौ० ॥ ७ ॥ चारुचामीकराभासिवासाविभुर्वैजयंतीभराभासितोरस्थलः ॥ नंदवृंदावनेगोपिकामध्यगःसंजगौ० ॥८॥ चारुचंद्रावलीलोचनाचुंबितोगोपगोवृंदगोपालिकावल्लभः ॥ कंसवंशाटवीदाहदावानलःसंजगौ० ॥ ९ ॥ बालिकातालिकानाललीलालयासंगसंदर्शितभ्रूलताविभ्रमः ॥ गोपिकागीतदत्तावधानःस्वयंसंजगौ० ॥ १० ॥ मौलिमालांगदैःकिंकिणीकुंडलैर्भूषितोनंदनोनंदराजस्यच ॥ प्रीतिकृत्सुंदरोदेविप्रीत्यातवसंजगौ० ॥ ११ ॥ पारिजातंसमुद्धृत्यराधावरोरोपयामासभामाभयादंगणे ॥ बल्लवीवृंदवृंदारिकाकामुकःसंजगौ० ॥ १२ ॥ ऋक्षराजंविनिर्जित्यनीत्वामणिंसंददौभीतवद्भूमिनाथायच ॥ सोपिरासेसमागत्यरासेश्वरोसंजगौवेणुनादेवकीनंदनः ॥ १३ ॥ ॥ गर्गउवाच ॥ ॥ इति श्रुत्वाराधिकातुमहिमांवेणुवादिनः ॥ प्रसन्नाहिसमुत्थायपरिरंभेप्रियंप्रिया ॥ १४ ॥ वृंदावनेशोगोविंदोरेमेवृंदावनेवने ॥ वृंदावननिवासिन्यापश्यन्वृंदावनद्रुमान् ॥ १५ ॥ ततःकृष्णंचजगृहुःसर्वतोव्रजयोषितः ॥ वर्षाकालेनृपश्रेष्ठसौदामिन्योयथाघनं ॥ १६ ॥ यावतीस्तत्रगोप्यश्चतावद्रूपधरोहरिः ॥ यमुनापुलिनंराजँस्ताभिःसाकंसमाययौ ॥ १७ ॥ बभूवुर्मुदितानार्योयथाचश्रुतयःपुरा॥स्ववस्त्रैःकृष्णचंद्रायह्यासनंताअचीकृपन् ॥१८॥ श्रीराधारमणस्तस्मिन्नासनेसहराधया ॥ निषसादह्यहोराजंस्ताभिर्भक्त्यावशीकृतः ॥ १९ ॥ गोलोकेयादृशंरूपंदर्शयामासतादृशं ॥ गोपीनांराधयासार्द्धंकृष्णंत्रैलोक्यमोहनं ॥ २० ॥ दृष्ट्वागोकुलचंद्रस्यसुरूपंपरमाद्भुतं॥स्वात्माननाविदन्गोप्योब्रह्मानंदेननिर्वृताः ॥ २१ ॥ स्थलंकृत्वाविहारंतुविवेशयमुनाजलं ॥ ताभिर्भक्त्यावशीभूतोगोपीभिःसहराधया ॥ २२ ॥ वारांविहारंभगवान्स्त्रीभिःसार्द्धंचकारह ॥ मंदाकिन्यांयथाशक्रोह्यप्सरोभिर्वृतोदिवि ॥ २३ ॥ माधवोमाध

वींराजन्माधवीमाधवंजले ॥ अन्योन्यंतौसिषिचतुःसलिलैसलिलैस्त्वरं ॥२४॥ कबरीकेशपाशाभ्यांप्रच्युतैःकुसुमैर्बभौ ॥ यमुनाचित्रवर्णे
श्चयथोष्णिङ्मुद्रितानृप ॥ २५ ॥ विद्याधर्योदेवपत्न्यःपुष्पवर्षप्रचक्रिरे ॥ प्रश्लथद्वस्त्रनीव्यस्तामोहंप्राताःस्मरातुराः ॥ २६ ॥ अथकृ
ष्णोवारिलीलांकृत्वावैलीलयायुतः ॥ जलान्निष्क्रम्यराजेंद्रगिरिंगोवर्द्धनंययौ ॥ २७ ॥ अनुजग्मुर्गोपिकास्तंसहचर्यौनृपेश्वर ॥ काश्चिद्व्य
जनहस्ताश्चकाश्चिच्चामरवाहकाः ॥ २८ ॥ काश्चित्तांबूलहस्ताश्चकाश्चिद्दर्पणवाहकाः ॥ काश्चिद्भूषणहस्ताश्चकाश्चित्कुसुमवाहकाः ॥
॥ २९ ॥ काश्चिच्चंदनहस्ताश्चकाश्चिद्भाजनवाहकाः ॥ काश्चिद्यावकहस्ताश्चकाश्चिदंबरवाहकाः ॥ ३० ॥ काश्चिन्मृदंगहस्ताश्चकाश्चि
त्कांस्यधराश्चवै ॥ मुरयष्टिधराःकाश्चित्काश्चिद्वीणाधराःपराः ॥ ३१ ॥ करतालकराःकाश्चित्काश्चिद्गानपरायणाः ॥ षट्त्रिंशद्रागरागि
ण्याव्रजस्त्रीरूपधारकाः ॥ ३२ ॥ गोलोकाद्द्वारतेपूर्वमागताराधयासह ॥ जगुस्ताननृतुस्तत्रश्रीराधेश्वरसंनिधौ ॥ ३३ ॥ ननर्त्तमध्ये
तासांचकृष्णोमदनमोहनः ॥ प्रगायन्वेणुनागीतंत्रिलोकींमोहयन्हरिः ॥ ३४ ॥ वादित्रैःकिंकिणीभिश्चवलयनूपुरकंकणैः ॥ गीतैर्मिश्रित
शब्दोभूत्तुमुलोरासमंडले ॥ ३५ ॥ देवाश्चदेवपत्न्यश्चरासंदृष्ट्वाहरेरपि ॥ बभूवुर्मूर्च्छताराजन्गमनेस्मरपीडिताः ॥ ३६ ॥ चंद्रिकायां
तुचंद्रस्यचतुरश्चंचलश्चलन् ॥चंद्रावल्याबभौचैवघनश्चंचलएवच ॥ ३७ ॥ राधायास्तत्रशृंगारंस्रग्भिर्यावककज्जलैः ॥ चक्रेकमलपत्राद्यैर्गि
रौगिरिधरोमहान् ॥ ३८ ॥ कुंकुमागुरुकस्तूरीचंदनाद्यैश्वराधिका ॥ चक्रेकमलपत्रंवैश्रीकृष्णस्याननेवरं ॥ ३९ ॥ ततश्चसस्मिताराधासस्मितंभगवन्मुखं ॥ पश्यंतीनागवल्ल्याश्चवीटकंप्रददौमुदा ॥४०॥ प्रियाप्रदत्तंतांबूलंबुभुजेनंदनंदनः ॥ कृष्णदत्तंचतांबूलंचखादराधि
कामुदा ॥ ४१ ॥ कृष्णचर्विततांबूलंनीत्वाराधाबलात्पुनः ॥ जघासभक्त्यासाशीघ्रंसतीपतिपरायणा ॥ ४२ ॥ प्रियाचर्विततांबूलंयया
चेभगवान्हरिः ॥ राधाददौनतंभीतापपाततत्पदांबुजे ॥४३॥ पद्मापद्मावतीनंदीआनन्दीसुखदायिनी ॥ चंद्रावलीचन्द्रकलावंद्याह्येताहरि
प्रियाः ॥४४॥वृंदावनेहरिस्ताभिर्वसंततुप्रपूरिते॥नानाप्रकारंशृंगारंसचकारमनोजवत् ॥४५ ॥ काश्चित्पिबंतिगोप्यस्तुश्रीकृष्णस्याधरा
मृतं ॥काश्चिद्दालिंगनंचक्रुःकृष्णस्यपरमात्मनः ॥ ४६ ॥ ततःकृष्णस्तुभगवान्गोपीनांकुचकुंकुमैः ॥ सुवर्णवर्णोभूत्वावैरेजेमदनमोहनः ॥

॥ ४७ ॥ पुनर्गोपीजनैःसार्द्धंश्रीगोपीजनवल्लभः ॥ रासंचकारराजेंद्रसुंदरेकदलीवने ॥ ४८ ॥ एवंहेमंतरजनीगोपीनांरासमंडले ॥ व्यतीताक्षणवद्राजन्नित्यानंदेनतत्रवै ॥ ४९ ॥ अथनंदस्यसदनंरासंकृत्वाययौहरिः ॥ वृषभानुपुरंराधातथागोप्योगृहान्ययुः ॥ ५० ॥ नजानंतिव्रजेगोपारासवार्ताहरेरपि ॥ स्वान्स्वान्दारान्स्वपार्श्वस्थान्मन्यमानानृपेश्वर ॥ ५१ ॥ इदंशृंगारचरितंराधामाधवयोःपरं ॥ येपठंतिप्रशृण्वन्तितेप्राजिष्यंतिचाक्षरं॥५२॥इति श्रीगर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौरासक्रीडासंपूर्तिर्नामषट्चत्वारिंशोऽध्यायः॥४६ ॥

॥ गर्गउवाच ॥ ॥ इदंकृष्णस्यचरितंगुप्तंशास्त्रेषुवर्णितं ॥ मयातवाग्रेराजेंद्रअथान्यच्छृणुविस्तरात् ॥ १ ॥ एवंस्थित्वादिनान्यष्टौश्रीकृष्णोनंदपत्तने ॥ आनंदंप्रददन्नृणांपुनर्गंतुंमनोदधे ॥ २ ॥ यशोमतीकृष्णमाताप्राणेभ्योपिप्रियंसुतं ॥ गंतुमभ्युदितंदृष्ट्वारुरोदोच्चैर्यथापुरा ॥ ३ ॥ रुरुदुस्तत्रगोप्यश्चबाष्पपर्याकुलेक्षणाः ॥ स्मरंत्यःपूर्वदुःखानिगेहेगेहेनृपेश्वर ॥ ४ ॥ यावत्ये जनार्यश्चतावद्रूपधरोहरिः ॥ पृथगाश्वासयामासतथाराधांसकोविदः ॥ ५ ॥ मातरंप्राहभगवान्मातःशोकंतुमाकुरु ॥ शीघ्रमत्रागमिष्यामिकारयित्वाक्रतूत्तमं ॥ ६ ॥ त्वंनमन्यसेचेन्मातर्नित्यंद्रक्ष्यसिचांतिके ॥ पुत्ररूपंचमांभक्त्याकृतांतभयभंजनं ॥ ७ ॥ एवंतांतुसमाश्वास्यनिष्क्रम्यसदनाद्धरिः ॥ गोपैर्युक्तोश्रुपूर्णाक्षःपौत्रसेनांजगामह ॥८॥ गत्वानिरुद्धसेनायांयादवान्हयमोचने ॥ ददावाज्ञांनृपश्रेष्ठसाक्षान्नारायणोहरिः ॥ ९ ॥ नोदितःकृष्णचंद्रेणहयंसंपूज्ययत्नतः ॥ पुनर्मुमोचतत्पौत्रोविजयार्थंहिपूर्ववत् ॥ १० ॥ यादवाश्चानिरुद्धाद्याःनंदंनत्वाश्रुपूरिताः ॥गंतुमारुरुहुःसर्वेवाहनानिचकृच्छ्रतः ॥ ११ ॥ कृष्णाकारान्कृष्णपुत्रान्कृष्णपौत्रांश्चसुंदरान् ॥ गंतुमभ्युदितान्सर्वान्कृष्णेनसहितान्यदून् ॥ १२ ॥ दृष्ट्वातेरुरुदुर्गोपागोविंदविरहातुराः ॥ स्मरंतःपूर्वदुःखानिशुष्ककंठोष्ठतालुकाः ॥ १३ ॥ रुरोदनंदराजोपिबाष्पव्याकुललोचनः ॥ नकिंचिदूचेदुःखार्त्तोमुखेनपरिशुष्यता ॥ १४ ॥ सर्वानाश्वासयामासकृष्णोप्यश्रुपरिप्लुतः ॥ आयस्यइतिवाक्यैश्चामिलित्वातुपृथक्पृथक् ॥ १५ ॥ चैत्रमासेयदायज्ञोद्वारकायांभविष्यति ॥ आव्हयिष्यामिगोपालायुष्मान्सर्वान्नसंशयः ॥ १६ ॥ गोपालागोकुलेनित्यंगोपालंमांहिद्रक्ष्यथ ॥ तस्मान्निवासंकुरुतअत्रैवव्रजमंडले ॥ १७ ॥ एवमाश्वास्यतैर्दत्तंपारिबर्हंप्रगृह्यच ॥ नंदंनत्वारथेस्थित्वाप्रायाद्वृष्णिवरै

र्हरिः ॥ १८ ॥ नंदाद्याादुःखितागोपाःकृष्णस्यचरणांबुजे ॥ क्षिप्तंमनःपुनर्हर्तुंमनीशागोकुलंययुः ॥ १९ ॥ गोपागोप्यश्चश्रीकृष्णंप्रेममग्ना
श्चनित्यशः ॥ समीपेनृपपश्यंतियोगिनामपिदुर्लभं ॥२०॥ इति श्रीग०सं०ह०सुमेरौव्रजादन्यत्रगमनंनामसप्तचत्वारिंशोऽध्यायः ॥४७॥
॥ गर्गउवाच ॥ ॥ कृष्णांसमुत्तीर्यततःप्रपश्यन्जगामवाजीकुरुपत्तनंच ॥ करोतिराज्यंनृपचक्रवर्त्तीवैचित्रवीर्योबलवान्हियत्र ॥ १ ॥ त
तोददर्शतुरगःकौरवाणांपुरंवरं ॥ नानाचोपवनैर्युक्तंतडागैश्चसरोवरैः ॥ २ ॥ दुर्गेणगंगयायुक्तंतथापरिखयानृप ॥ सुवर्णरौप्यसदनैर्महाशू
रजनैर्वृतं ॥ ३ ॥ सुयोधनस्तत्रपुराद्विनिर्गतोहंतुंमृगान्वैवनगोचरान्नृप ॥ ददर्शयज्ञस्यहयंसपत्रकंरथस्थितोवीरजनैर्विभूषितः ॥ ४ ॥
दृष्ट्वातुरंगमंप्रीतोस्वरथादवतीर्यच ॥ मानीदुर्योधनोराजंस्त्वरंजग्राहलीलया ॥ ५ ॥ कर्णभीष्मकृपद्रोणभूरिदुःशासनादिभिः ॥ युक्त
स्तद्भालपत्रंचवाचयामासहर्षितः ॥ ६ ॥ चंद्रवंशेयदुकुलउग्रसेनोविराजतं ॥ इंद्रादयःसुरगणायस्यादेशानुवर्तिनः ॥ ७ ॥ सहायोयस्य
भगवान्श्रीकृष्णोभक्तपालकः ॥ अस्तिवैद्वारकापुर्यांतद्भक्त्यानिवसन्हरिः ॥ ८ ॥ तद्वाक्याद्धयमेधंसउग्रसेनोनृपेश्वरः ॥ चक्रवर्तीहठा
द्यज्ञंस्वयशोर्थंकरोतिहि ॥ ९ ॥ मोचितस्तेनतुरगोहयानांप्रवरःशुभः ॥ तद्रक्षकःकृष्णपौत्रोऽनिरुद्धोवृकदैत्यहा ॥ १० ॥ गजाश्वरथ
वीराणांसेनासंघसमन्वितः ॥ राजानोयेकरिष्यंतिराज्यंकोशूरमानिनः ॥ ११ ॥ तेगृण्हंतुयज्ञहयंस्वबलात्पत्रशोभितं ॥ तंमोचयातिधर्मा
त्मागृहीतंचहयंनृपैः ॥ १२ ॥ स्वबाहुबलवीर्येणानिरुद्धोलीलयाहठात् ॥ तस्यान्यथाचपदयोःपतित्वायांतुधन्विनः ॥ १३ ॥गर्गउवाच॥
तत्पत्रंवाचयित्वैवंकौरवास्तेतुशत्रवः ॥ ऊचुःपरस्परंक्रुद्धामानिनोरक्तलोचनाः ॥ १४ ॥ ॥ कौरवाऊचुः ॥ ॥ अहोकिंलिखितंधृष्टै
र्भालपत्रेहयस्यच ॥ नसंतिकिंहिराजानोयादवानांचसंमुखे ॥ १५ ॥ राजसूयेपुरास्माभिर्यादवायेविनिर्जिताः ॥ हयमेधंकरिष्यंतिपुन
स्तेगतबुद्धयः ॥ १६ ॥ तस्मात्सर्वान्विजेष्यामोनदास्यामस्तुरंगमं ॥ पश्चाद्वयंकरिष्यामोहयमेधंक्रतूत्तमं ॥ १७ ॥ कउग्रसेनःकःकृ
ष्णःहयरक्षाकरस्तुकः ॥ यादवैःसहिताह्येतेकिंकरिष्यंतिपौरुषं ॥ १८ ॥ कृष्णाद्यायादवाःसर्वेविहायमथुरांपुरीं ॥ गताःसमुद्रंशरणंयु
द्धंत्यक्त्वाभयाच्चनः ॥ १९ ॥ राज्यंदत्तंपुराह्येषामस्माभिश्चकृपान्वितैः ॥ कृतघ्नास्तेचमन्यंतेस्वात्मानंचक्रवर्त्तिनं ॥ २० ॥ पांडवानां

चसन्मानाद्यादवानहिमारिताः ॥ निष्कासिताश्चतेस्माभिःपांडवाःशत्रवःकिल ॥ २१ ॥ यदूनद्यविनिर्जित्यसंग्रामेचपलायितान् ॥ दर्शयामश्चाद्यकायसहसाचक्रवर्तिताम् ॥ २२ ॥ एवंश्रीकृष्णविमुखावाचःसर्वेवदंतिहि ॥ हतास्तेकौरवाराजन्श्रियाराजविभूतिभिः ॥ २३ ॥ ततश्चजगृहुःसर्वेनानाशस्त्राणिवेगतः ॥ हयंप्रवेशयामासुःपुरेतत्रतुसंस्थिताः ॥ २४ ॥ गतेचतुरगेदूरंसांबःकृष्णेननोदितः ॥ त्वरंकृष्णां समुत्तीर्यगंभीरांमार्गदायिनीं ॥ २५ ॥ अक्षौहिणीभिर्दशभिःपृष्ठतोदंशितोरुषा ॥ हस्तिनापुरमक्रूरयुयुधानादिभिर्ययौ ॥ २६ ॥ एवंते यादवाःसर्वेहस्तिनापुरसन्निधौ ॥ आयाताह्यहर्तृंश्चकौरवान्ददृशुःस्थितान् ॥ २७ ॥ ऊचुस्तेवीक्ष्यबलिनोलोकद्वयजिगीषवः ॥ तान्स र्वांश्चतृणीकृत्ययादवाःकृष्णदेवताः ॥ २८ ॥ अहोबवंधकश्चाश्वंकस्यहृष्टःकृतांतराट् ॥ प्राप्स्यतेकस्तुसंग्रामेनाराचैःपरमांव्यथां ॥ २९॥ अहोवैकिंनजानंतिवृष्णींद्रंचक्रवर्तिनं ॥ उग्रसेनंराजराजंदेवदानववंदितं ॥ ३० ॥ राजसूयस्यकर्त्तारमद्वितीयंनृपेश्वरं ॥ नृपाः स्वात्मविनाशायगृण्हंतितुरगंततः ॥ ३१ ॥ हेमांगदश्चेंद्रनीलोबकोभीषणएवच ॥ बल्वलश्चनृपाःसर्वेरणेऽस्माभिर्विनिर्जिताः ॥ ३२ ॥ इतिश्रुत्वाकौरवास्तेक्रोधप्रस्फुरिताधराः ॥ प्रत्यूचुस्तान्हिपश्यंतस्तिरश्चीनैश्चचक्षुभिः ॥ ३३ ॥ ॥ कौरवाऊचुः ॥ गृहीत स्तुरगोऽस्माभिर्यूयंकिंतुकरिष्यथ ॥ युष्मान्सर्वान्नयिष्यामःसायकैर्यमसादनं ॥ ३४ ॥ उग्रसेनःकतिदिनैराज्यंलब्ध्वातुकृष्णतः ॥ मानं करोतितंबद्ध्वाराज्यंकुर्मोवयंकिल ॥ ३५ ॥ अनिरुद्धस्तुकुत्रास्तेह्यस्माकंचभयाद्गतः ॥ वदैतंनंशरैर्युद्धेपूजयामोनसंशयः ॥ ३६ ॥ ॥ गर्गउवाच ॥ ॥ इतितेषांवचःश्रुत्वायादवाःक्रोधमूर्च्छिताः ॥ चिक्षिपुःसायकांश्चापैःकौरवाणांमुखेषुच ॥ ३७ ॥ केचिद्भग्नमुखाबाणैश्च छिन्नजिह्वाश्चकौरवाः ॥ भग्नदंताश्छिन्नमुखावमंतोरुधिरंबहु ॥ ३८ ॥ दुर्योधनंछिन्नमुखानिहतास्तेययुर्द्रुतं ॥ पृष्टास्तेकथयामासुर्याद वैःप्रकृतंचतत् ॥ ३९ ॥ इतिश्रीमद्गर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौकौरवैःश्यामकर्णग्रहणंनामाऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ गर्गउवाच ॥ ॥ दुर्योधनःस्ववीराणांभीष्मद्रोणकृपादिभिः ॥ दृष्ट्वामुखानिभग्नानिकोपंकृत्वेदमब्रवीत् ॥ १ ॥ अहोवैयादवास्तुच्छाआ गतामृत्युसंमुखे ॥ किंनजानंतितेमूढाधृतराष्ट्रबलंमहत् ॥ २ ॥ इत्युक्त्वाप्रेषयामासुःस्वांसेनांचतुरंगिणीं ॥ गजाश्वरथवीरैश्चयुक्तांयुद्धेच

यादवान् ॥ ३ ॥ साचचालमहासेनाकंपयंतीमहीतलं ॥ अक्षौहिणीभिर्दशभिस्त्रासयंतीबलाद्रिपून् ॥ ४ ॥ आयांतींतांततोदृष्ट्वासां
बोजांबवतीसुतः ॥ स्वांसेनांनोदयामासहर्षाद्वीरैर्विभूषितः ॥५ ॥ ततश्चकौरवाःसर्वेरक्षणार्थंतुस्वात्मनः ॥ क्रौंचव्यूहंविनिर्मायतत्रसर्वेहि
संस्थिताः ॥ ६ आसीत्तस्यमुखेभीष्मोग्रीवायांद्रोणएवच ॥ पक्षयोःकर्णशकुनीतस्यपुच्छेसुयोधनः ॥ ७ ॥ मध्येतस्यमहासेनाचतुरंग
बलैर्युता ॥ कृतंहिदृष्ट्वाव्यूहंक्रौंचंवैशत्रुदुर्जयं ॥ ८ ॥ क्रौंचव्यूहंतत्रदृष्ट्वायदवोयुद्धशंकिताः ॥ ऊचुर्हेसांबत्वमपिकुरुव्यूहंप्रयत्नतः ॥९॥
इतितेषांवचःश्रुत्वासांबःसंग्रामकोविदः ॥ नचकाररणेव्यूहंकौरवानगणय्यच ॥ १० ॥ युद्धंकर्तुंप्रचलितेतेद्वेसेनेयदानृप ॥ तदामुहूर्तप
र्यंतंचकंपेवसुधाभृशम् ॥ ११ ॥ जघ्नुर्भेर्य्यश्चशंखाश्चह्युभयोःसेनयोस्तदा ॥ टंकाराश्चैवचापानांश्रूयंतेतत्रतत्रह ॥ १२ ॥ गर्जंतिदंतिन
स्तत्रहयाहेषंतितत्रह ॥ शब्दंशूराःप्रकुर्वंतिनदंतिरथनेमयः ॥ १३ ॥ सैन्यपादरजोभिश्चह्यंधकारोभवद्रणे ॥ मलिनंगगनंभूत्वासूर्य्य
स्तत्रनदृश्यते ॥ १४ ॥ उभयोःसेनयोर्युद्धंततःसमभवद्भृशं ॥ बाणैर्गदाभिःपरिघैःशतघ्नीभिश्चशक्तिभिः ॥ १५ ॥ परस्परंतेयुयुधुराह
वेनिशितैःशरैः ॥ गजागजैरथारथैर्हयाहयैर्नरानरैः ॥ १६ ॥ शरांधकारेसंजातेसांबोबाणैर्धनुर्द्धरः ॥ रणेभीष्मेणयुयुधेऽक्रूरःकर्णेनतत्रच ॥
॥ १७ ॥ युयुधानःशकुनिनाद्रोणाचार्य्येणसारणः ॥ दुर्योधनेनसंग्रामेसात्यकिःशीघ्रमेवच ॥ १८ ॥ बलीदुःशासनेनापिकृतवर्मातुभूरि
णा ॥ एवंपरस्परंह्यासीत्संग्रामोभयकारकः ॥ १९ ॥ ततःसांबस्तुसंक्रुद्धःसज्जंकृत्वाधनुर्दृढं ॥ टंकारयामासतदाशूराणांकंपयन्हृदि ॥
॥ २० ॥ श्रीकृष्णंप्रथमंनत्वामुमुचेसायकान्दश ॥ तानागताञ्छरान्भीष्मश्चिच्छेदस्वशरैरपि ॥ २१ ॥ रणेसांबःपुनस्तस्यकवचेसा
यकान्दश ॥ निचखानस्वर्णमयान्नादंकृत्वानुसिंहवत् ॥ २२ ॥ चतुर्भिःसायकैस्तस्यनिजघ्नेचतुरोहयान् ॥ चिच्छेदबाणैर्दशभिस्त
त्कोदंडंगुणान्वितं ॥ २३ ॥ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ उत्थायभीष्मःसहसागदांजग्राहरोषतः ॥ २४ ॥ सांबःप्राहत्वया
सार्द्धंकथंयुद्धंकरोम्यहं ॥ पदातिनारथंचान्यंतुभ्यंदास्यामिसंयुगे ॥ २५ ॥ सशस्त्रंस्यंदनंयुद्धेत्वंगृहाणकुरूद्वह ॥ जयमांनिस्त्रपंमूढंवृद्ध
स्त्वंपूज्यएवच ॥ २६ ॥ सउवाचततःसांबंक्रोधात्प्रस्फुरिताधरः ॥ दंतान्दन्तैर्लिहन्नोष्ठंजिह्वयारक्तलोचनः ॥ २७ ॥ त्वद्दत्तंस्यंदनंस्थ

त्वायदायुद्धंकरोम्यहं ॥ तदाभवतिमेकीर्तिःपापंनिरयमेवच ॥ २८ ॥ प्रतिग्रहपराविप्रादातारश्चवयंस्मृताः ॥ दत्तंराज्यंयदुभ्यश्चपुरा
स्माभिःकृपालुभिः ॥ २९ ॥ श्रुत्वातद्वचनंसांबःप्रत्युवाचरुषान्वितः ॥ भयाद्राज्यंप्रदास्यंतिराजानोमंडलेश्वराः ॥ ३० ॥ निरीक्ष्यभू
मौशास्तारंसंस्थितंचक्रवर्तिनं ॥ इत्येवंवाक्यमाकर्ण्यभीष्मःशूरशिरोमणिः ॥ ३१ ॥ जघानगदयागुर्व्यासांबवक्षस्थलेनृप ॥ गदाप्रह
रव्यथितःसांबःसंमूर्च्छितोभवत् ॥ ३२ ॥ सारथिस्तंरथेकृत्वाऽपोवाहशंकितोरणात् ॥ कोलाहलस्तदैवासीद्यदुसैन्येनृपेश्वर ॥ ३३ ॥
भीष्मोन्यंरथमारुह्यदंशितःसशरासनः ॥ ययौसुयोधनंशीघ्रंयादवान्मारयन्पथि ॥ ३४ ॥ संग्रामेतत्रराजेंद्रसात्यकिश्चसुयोधनं ॥ चक्रे
बाणैश्चविरथंगृद्धपक्षैःस्फुरत्प्रभैः ॥ ३५ ॥ विरथोपिरथंचान्यंससमारुह्यवेगतः ॥ तंशत्रुंविरथंचक्रेशरैराशीविषोपमैः ॥ ३६ ॥ सवा
न्यंरथमारुह्यसात्यकिःशीघ्रविक्रमः ॥ बाणेनैकेनतद्यानंचिक्षेपनृपयोजनम् ॥ ३७ ॥ रथःपपातभूमध्येससूतःसतुरंगमः ॥ अंगारवद्विशी
र्णोऽभून्मूर्च्छितोभूत्सुयोधनः ॥ ३८ ॥ तदाद्रोणस्तुसंक्रुद्धोबाणेनाग्निमयेनच ॥ जघानसात्यकियुद्धेस्वशत्रुंतुविहायवै ॥ ३९ ॥ रथ
स्तुतस्यदग्धोभूत्सतुरंगःससारथिः ॥ अभवन्मूर्च्छितःसोपिदग्धांगोबाणज्वालया ॥ ४० ॥ कृतवर्माततःक्रुद्धोभूरिंजित्वारणांगणे ॥
आजगामनदन्राजन्द्रोणःपरिरुषान्वितः ॥ ४१ ॥ सगत्वाप्रधनेरोषाद्द्रोणाचार्य्यंशरैरपि ॥ चक्रेपदातिनंवीरोनिःशस्त्रंछिन्नकंचुकं ॥४२॥
ततःकर्णस्तुसंक्रुद्धस्त्यक्त्वाक्रूरंरणांगणे ॥ तताडकृतवर्माणंशक्त्याशक्तीवतारकम् ॥ ४३ ॥ साशक्तिस्तत्तनुंभित्त्वाविवेशधारिणीतले॥
निर्भिन्नहृदयोभूत्वाकृतवर्मापपातह ॥ ४४ ॥ युयुधानस्ततःकोपान्निर्जित्यशकुनिंमृधे ॥ कर्णस्योपरिराजेंद्रह्याजगामरथेनच ॥ ४५ ॥
गत्वाशरासनेनापिसुमुचेसायकान्दश ॥ वीक्ष्यतानागतान्कर्णोनिजघानस्वसायकैः ॥ ४६ ॥ संघृष्टास्तत्रसंग्रामेतयोर्बाणाःपरस्परं ॥
विस्फुलिंगान्क्षरंतस्तेभ्रमंतेऽलातचक्रवत् ॥ ४७ ॥ युयुधानस्ततःकोपात्कर्णस्यजगतीपते ॥ जघानकवचेबाणान्काकपक्षयुतान्शि
तान् ॥ ४८ ॥ तेशराःकर्णकवचेनलग्नाःपतिताभुवि ॥ राजन्पापस्यकर्तारोनस्वर्गेनिरयेयथा ॥ ४९ ॥ ततःप्रहस्यकर्णस्तुयुयुधानंतुवि
स्मितं ॥ चकारविरथंयुद्धेशरैर्नानास्त्रयोजितैः ॥ ५० ॥ दुःशासनंबलिंचैवकृत्वायुद्धेविमूर्च्छितं ॥ आययौसंयुगेकर्णोरथेनानलवर्चसा

॥५१॥आगतंबलिनंदृष्ट्वाकर्णोभास्करनंदनः ॥ पवनास्त्रेणबाणेनतंचिक्षेपसवाहनं॥५२॥पपातयोजनेसोपिसांबस्तत्रागमत्पुनः ॥ अंधका
रंशरैःकुर्वन्कौरवान्मारयन्रुषा॥५३॥॥ इति श्रीग०सं०यांहयमेधचरित्रसुमेरौयदुकुरुसंग्रामवर्णनंनामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥
॥ गर्गउवाच ॥ ॥ तदैववृष्णयःसर्वेभोजवृष्ण्यंधकादयः ॥ माथुराःशूरसेनाद्याःसमुत्तीर्ययमस्वसां ॥ १ ॥ रजोभिश्चनभोव्याप्तंकुर्वंतश्च
महीतलं ॥ चालयंतश्चबलिनोमहासंग्रामकर्कशाः ॥ २ ॥ विलोकयंतस्तुरगंसर्वतस्तेमहाबलाः ॥ आजग्मुश्चानिरुद्धाद्याःश्रीकृष्णाद्यान्नृ
पेश्वर ॥ ३ ॥ वृष्णयस्तत्रयुद्धस्यमहाघोषंभयंकरं ॥ शरासनानांटंकारंशतघ्नीनांरवंतथा ॥४ ॥ शूराणांगर्जनंचैवशस्त्राणांचटचटंतथा ॥
कोलाहलंचहाःकारंश्रुत्वातेविस्मयंययुः ॥५॥ मत्वातेयुद्धमासीद्धैयादवानांचकौरवैः ॥ शंकिताअनिरुद्धाद्याःकृष्णाद्याआययुर्द्रुतं ॥ ६॥
श्रीकृष्णमागतंदृष्ट्वानिरुद्धाद्यैःसमन्वितं ॥ ससैन्यंचसहायार्थेनेमुःसांबादयानृप ॥ ७ ॥ कृष्णेसमागतेनेदुर्भेर्य्यःशंखाश्चगोमुखाः ॥ पुष्पव
र्षैर्जयारावंदेवाश्चक्रुश्चयादवाः ॥ ८ ॥ दृष्ट्वानिरुद्धंप्रधनेसमागतंह्यक्षौहिणीभिःशतभिःपरिवृतं ॥ प्रचालयंतंवसुधामहाबलंविदुद्रुवुस्तेतुभ
याच्चकौरवाः ॥ ९॥ प्रलयाब्धिसमंसैन्यमंधकानांविलोक्यच ॥ भीताश्चदुद्रुवुर्वैश्याःगेहेगेहेकृतार्गलाः ॥ १० ॥ ब्राह्मणाःक्षत्रियावैश्यावृष्
लाःस्त्रीजनास्तथा ॥ दुर्योधनंशपंतश्चरुरुदुर्निर्गतागृहात् ॥ ११ ॥ ततोविहायमूर्च्छांवैमृधेदुःशासनाग्रजः ॥ सद्यःसुप्तइवोत्तस्थौयदुसैन्यंद
दर्शह ॥ १२ ॥ दृष्ट्वाभयंकरांसेनांयादवानांसुयोधनः ॥ स्वपुरंशंकितोभूत्वापद्भ्यांभीतस्त्वरंययौ ॥१३॥ कर्णभीष्मकृपद्रोणभूरिदुर्यो
धनादयः ॥ सभायांधृतराष्ट्रंवैनत्वासर्वमवर्णयन् ॥ १४ ॥ स्वानांपराजयंश्रुत्वायादवानांजयंतथा ॥ कृष्णस्यागमनंचैवनृपोविदुरमब्र
वीत् ॥ १५ ॥ ॥ धृतराष्ट्रउवाच ॥ ॥ अक्षौहिणीशतयुतेवासुदेवेसमागते ॥ कुपितेद्यवयंवीरकरिष्यामश्चकिंवद ॥ १६ ॥ नृप
स्यवचनंश्रुत्वाप्रहस्यविदुरोब्रवीत् ॥ ॥ विदुरउवाच ॥ ॥ पुरारामेणचैकेनकुपितेनगजाह्वयं ॥ विकर्षितंचगंगायांतस्यभ्राताहिचा
गतः ॥ हृत्कंजकोशाद्देवक्यांजातोयःसहरिर्नृप ॥ १७ ॥ येनवैसंयुगेराजन्कंसाद्याःशकुनादयः ॥ मारिताबहवादैत्याःनिर्जिताश्चनृपाःसु
राः ॥ १८॥ तस्माद्युद्धस्यसमयोनास्तिराजन्विलोकय ॥ कौरवैःश्यामकर्णंतुकृष्णायदातुमर्हसि ॥ १९ ॥ माभूत्कुरूणांवृष्णीनांकल

होनाशकारकः ॥ एवंराजाबोधितस्तुविदुरेणानुजेनवै ॥ २० ॥ उवाचकौरवान्प्राज्ञोदेशकालोचितंवचः ॥ ॥ धृतराष्ट्रउवाच ॥ ॥
गत्वाकृष्णस्यनिकटेतुरगंदातुमर्हथ ॥ २१ ॥ संमुखेदेवदेवस्ययुद्धंकर्तुंचनार्हथ ॥यादवानांसहायार्थमागतंकुपितंहरिं॥२२॥यूयंप्रसन्नंकुरुत
गत्वातन्निकटंशनैः ॥ कौरवेंद्रस्यवचनंकौरवास्तेनिशम्यच ॥ २३ ॥ विविधानुपचारांश्चगंधाक्षतयुतान्किल ॥गृहीत्वादिव्यवस्त्राणिरत्ना
निविविधानिच ॥ २४ ॥ वदंतःपुण्यनामानिरामकेशवयोर्मुदा ॥ पद्भिर्विनिर्ययुःसर्वेकृष्णंद्रष्टुंभयान्विताः ॥ २५ ॥ आगतान्कौरवान्दृष्ट्वा
यादवाःक्रोधपूरिताः ॥ नानाशस्त्राणिजगृहुस्तत्रयुद्धायवेगतः ॥ २६ ॥ ऊचुस्तान्कौरवाःसर्वेवयंयुद्धायनागताः ॥ करिष्यामश्चकृष्णस्य
दर्शनंदुःखनाशनं ॥ २७ ॥ इतितेषांवचःश्रुत्वायादवाविस्मयंगताः ॥ कृष्णायकथयामासुःकौरवाणांविचेष्टितं ॥ २८ ॥ ततःकृष्णस्यव
चसाकौरवान्यदुसत्तमाः ॥ आव्हयामासुस्तेप्रीतानिःशस्त्रानागतान्नृप ॥ २९ ॥ आहूतास्तेतुहरिणागत्वाश्रीकृष्णसन्निधौ ॥ लज्जयावा
ङ्मुखाःसर्वेप्रणम्योचुःपृथक्पृथक् ॥ ३० ॥ पूर्वंद्रोणउवाचाथकृष्णभद्रजगत्पते ॥ रक्षमांकौरवान्रक्षमायायातवमोहितान् ॥ ३१ ॥
॥ कृपाचार्यउवाच ॥ ॥ मज्जन्मनःफलमिदंमधुकैटभारेमत्प्रार्थनीयमदनुग्रहएषएव ॥ त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्यभृत्य
इतिमांस्मरलोकनाथ ॥ ३२ ॥ ॥ कर्णउवाच ॥ ॥ भक्तस्यार्थेधनंक्षीणंस्वदारागतयौवनं ॥ स्वामिकार्येगताःप्राणाअंतेतिष्ठतुमाध
वः ॥ ३३ ॥ ॥ भूरिरुवाच ॥ ॥ याचामहेवरदकिंचिदनन्यलभ्यंनाथप्रसीदसुमुखीयदिदिव्यदृष्टिः ॥ अस्माभिरंजलिरयंविवशैर्निबद्धए
षैवमेभवतुदेवभवांतरेपि ॥ ३४ ॥ ॥ दुर्योधनउवाच ॥ ॥ जानामिधर्मंनचमेप्रवृत्तिर्जानामिपापंनचमेनिवृत्तिः ॥ केनापिदेवेनहृ
दिस्थितेनयथानियुक्तोस्मितथाकरोमि ॥ ३५ ॥ यंत्रस्यगुणदोषेणक्षम्यतांमधुसूदन ॥ अहंयंत्रंभवान्यंत्रीममदोषोनदीयतां ॥ ३६ ॥
॥भीष्मउवाच॥ ॥रागांधगोपीजनचुंबिताभ्यांयोगींद्रभोगींद्रनिषेविताभ्यां॥आताम्रपंकेरुहकोमलाभ्यांचाभ्यांपादाभ्यामयमंजलिर्मे३७॥
विदुरउवाच॥ ॥आस्तेतिविक्रयकृतांसुकृतानितानियेब्रह्मबालमिवतत्परिपालयंति॥यदैत्यदेवमुनिभिर्मनसाप्यगम्यंयन्नेतिनेतिचवदन्नहि
वेदवेदः ॥ ३८ ॥ ॥ श्रीगर्गउवाच ॥ ॥ एवंसंप्रार्थितःकृष्णःकौरवैःशरणागतैः ॥ प्रीतःप्रत्याहतान्राजन्मेघनिह्लादयागिरा ॥ ३९ ॥

॥ श्रीकृष्णउवाच ॥ ॥ आर्याःशृणुतमद्वाक्यमहमागतवान्यतः ॥युद्धवारयितुंचात्रनारदेनप्रचोदितः ॥४०॥ नमन्यंतिममाज्ञांवैमत्पुत्राश्च निरंकुशाः॥दीर्घाणांचप्रकुर्वंतिहापराधंचदूषणं॥४१॥ यूयंधन्याश्चमान्याश्चमिलनार्थंसमागताः ॥ मत्पुत्रैश्चकृतंयद्वैतत्सर्वंक्षंतुमर्हथ॥४२॥ उग्रसेनहयंवीराःकृपयाचविमुच्यतां ॥ पालनार्थंतुतस्यापियूयंगच्छतगच्छत॥४३॥यादवाःकौरवामित्राःकलहंतुपरस्परं ॥अकुर्वंनैवचाहं तिपूर्वंप्रेमविलोक्यच॥४४॥एवंतेकृष्णदेवेनमिष्टवाक्यैश्चतोषिताः ॥ तुरगंचददुःप्रीताःपारिबर्हणसंयुतं ॥४५॥दत्त्वातुरंगमंसर्वेकौरवाःखि न्नमानसाः॥स्वपुरंविविशूराजन्भीष्मोगंतुंमनोदधे४६इति श्रीग०सं०हयमेधचरित्रसुमेरौहस्तिनापुरविजयोनामपंचाशत्तमोऽध्यायः५०॥

॥ गर्गउवाच ॥ ॥ अथकृष्णस्तुभगवान्यादवानांचपालनं ॥ कृत्वामिलित्वाप्रययौरथेनापिकुशस्थलीं ॥ १ ॥ कृष्णेगतेऽनिरुद्धस्तु हयंसंपूज्ययत्नतः ॥ बंधनान्मोचयामासविजयार्थंनृपेश्वर ॥ २ ॥ मुक्तस्तुरंगःप्रययौदेशान्देशान्विलोकयन् ॥ पृष्ठतस्तस्यराजेंद्रत्वरं जग्मुश्चवृष्णयः ॥ ३ ॥ दुर्योधनंजितंश्रुत्वाभूपभूपास्तुरंगमं ॥ प्राप्तंनजगृहूराष्ट्रेकृष्णस्यबलिनोभयात् ॥ ४ ॥ अथाव्रजत्तुरंगोयंशृण्व न्पश्यन्नितस्ततः ॥ संप्राप्तोभूद्द्वैतवनेयत्रराजायुधिष्ठिरः ॥ ५ ॥ भ्रातृभिर्भार्ययासार्द्धंवनवासंकरोतिहि ॥ तस्मिन्वनेभीमसेनेवनाद्विपगणैः सह ॥ ६ ॥ नित्यंकरोतिक्रीडांवैबालःक्रीडनकैरिव ॥ ददर्शतुरगंतत्रतंवनंगह्वरंमहत् ॥ ७॥ न्यग्रोधाश्वत्थबिल्वैश्चखर्जूरपनसैस्तथा ॥ बकुलैःसप्तपर्णैश्चतिंदुकैस्तिलकैरपि॥८॥शालैस्तालैस्तमालैश्चबदरीलोध्रपाटलैः॥ बर्बूरशाल्मलीवेणुपलाशादिभिरन्वितं॥९॥आगतंवो टकंदृष्ट्वादुर्जरेनिर्जनेवने ॥ वराहमृगशार्दूलवृकसर्पगणैर्युते ॥ १० ॥ झिल्लीझंकारसंयुक्तेगृध्रचिल्लादिभिर्युते ॥ वृतेतथाभुजंगैश्चवल्मी कादर्द्धनिःसृतैः ॥ ११ ॥ शृगालमर्कमहिषगवयादिभिरन्विते ॥ नीलगोगजभालूकमार्जारैर्वनमानुषैः ॥ १२ ॥ युक्तेभयंकरेराजन्भीमो भीमपराक्रमः ॥ अश्वंजग्राहकेशेषुसपत्रंनृपलीलया ॥ १३ ॥ केनोत्सृष्टंवदन्वाक्यंस्वाश्रमंप्रययौशनैः ॥ तदैवचानिरुद्धाद्याआजग्मुःसर्वे यादवाः ॥ १४ ॥ पश्यंतोयज्ञगंधर्वमरण्येनृपकृच्छ्रतः ॥ दृष्ट्वागृहीतंतुरगमूचुस्तेतुपरस्परं ॥ १५ ॥ अहोवनचरोह्येषदृश्यतेभीमसेनव त् ॥ बृहद्बाहुर्महापुष्टोमहोच्चोरक्तलोचनः ॥ १६ ॥ महागौरःकूर्चधरोधृलिलिप्तोगदाधरः ॥ इत्थंब्रुवंतस्तेसर्वेपुनरूचुश्चतंजनं ॥ १७ ॥

करस्त्वंश्रीराजराजस्यहयंनीत्वाक्वयास्यसि ॥ तस्मान्मोचयशीघ्रंत्वांनचेद्धन्मोशिलीमुखैः ॥ १८ ॥ इतितद्वाक्यमाकर्ण्यहयंबध्वाचगव्ह
रे ॥ जग्राहस्वगदांगुर्वींभारायुतसमन्वितां ॥१९॥ तयाजघानसंग्रामेयादवान्भीमविक्रमः ॥ निपेतुर्वृष्णयस्तत्रभीमेननिहताश्चये ॥२० ॥
अनिरुद्धस्ततःक्रुद्धोदृष्ट्वातस्यपराक्रमं ॥ सहस्रवारणान्मत्तान्नोदयामासशत्रवे ॥ २१ ॥ ततःसदिग्गजैःसोपिभूमृच्छिखरसन्निभैः ॥ पा
तितोधरिणीपृष्टेविषाणैरवपीड्यते ॥२२ ॥ ततोभीमःसमुत्थायक्रोधात्प्रस्फुरिताधरः ॥ मत्तान्गजाञ्जघानाथगदयावज्रकल्पया ॥२३॥
कांश्चिच्चिक्षेपगगनेकांश्चिद्भूमौव्यपोथयत् ॥ कांश्चिन्ममर्दपादाभ्यांगजान्कांश्चिद्गजेषुच ॥ २४ ॥ ततश्चदुद्रुवुःसर्वेवारणाभयविव्हलाः ॥
तदाजगामसंक्रुद्धोगदस्तत्रगदाधरः ॥२५॥ गत्वातत्सन्निधौसोपिज्ञात्वाभीमंतुशंकितः ॥ उवाचनत्वाहेवीरकस्त्वंवदममाग्रतः ॥ २६ ॥
सोब्रवीद्भीमसेनोहंजित्वाद्यूतेनहेगद ॥ दुर्योधनेनरिपुणापुरानिष्कासितावयं ॥ २७ ॥ अत्रस्थानाद्योजनेतुभ्रातृभिश्चयुधिष्ठिरः ॥ करो
तिवनवासंवैह्यहोदैवस्यमायया ॥ २८ ॥ वनेवर्षागताश्चाष्टौचत्वारस्त्ववशेषिताः ॥ वर्षमात्रंकरिष्यामोऽज्ञातवासंवयंपुनः ॥ २९ ॥ अ
र्जुनस्तुगतःस्वर्गमाहूतोवासवेनच ॥ अहंनजानेतुकदाऽऽगमिष्यतिमहीतले ॥ ३० ॥ गदत्वंतुयदूनांचकुशलंकथयस्वनः ॥ तुरगःक
स्यभूपस्यकिमर्थंयूयमागताः ॥ ३१ ॥ इत्युक्त्वाभीमसेनस्तुरुरोदाश्रुपरिप्लुतः ॥ दुर्योधनकृतान्क्लेशान्संस्मरन्दुःखपूरितः ॥ ३२ ॥ इति
श्रुत्वासतद्वाक्यंतंसमाश्वास्यदुःखितः ॥ भीमायकथयामासवार्तांसर्वांचविस्तरात् ॥ ३३ ॥ श्रुत्वाभीमस्तुमुदितोनिरुद्धाद्यैर्यदूत्तमैः ॥
समन्वितस्तुप्रययौधर्मपुत्रस्यसन्निधौ ॥३४॥ आगतान्यादवाञ्श्रुत्वाजातशत्रुःप्रहर्षितः ॥ आनेतुंनिर्ययौराजन्नकुलाद्यैःसमन्वितः ॥३५॥
नेमुस्तंयादवाःसर्वेसोपिदत्वावराऽऽशिषं ॥ निवासयामाससुदासर्वान्द्वैतवनेनृप ॥ ३६ ॥ आगतेभ्यश्चसर्वेभ्योयथायोग्यंयथारुचि ॥प्रददौ
भोजनंराजास्थाल्याभास्करदत्तया ॥ ३७ ॥ उषित्वारजनीमेकांप्रभातेकार्ष्णिनंदनः ॥ कृतोनिमंत्रणंदत्वापांडवेभ्यःपरंतप ॥ ३८ ॥
यादवैःसहिताशीघ्रंमोचयित्वातुरंगमं ॥ ययौसारस्वतान्देशान्तुरगस्यचपृष्ठतः ॥ ३९ ॥ अशूराँश्चमहून्देशान्त्यक्त्वातुरगराट्ततः ॥
स्वेच्छयाविचरन्राजन्ययौकौंतलकंपुरं ॥ ४० ॥ तस्मिन्पुरेमहाराजचंद्रहासश्चवैष्णवः ॥ पालितायःकुलिंदेनकेरलाधिपतेःसुतः ॥४१॥

कृष्णदेवप्रसादेनराज्यंतत्रकरोतिहि ॥ कथास्तस्यापिभक्तस्यराजन्जैमिनिभारते ॥ ४२ ॥ अर्जुनाग्रेविस्तराद्वैनारदेनानुवर्णिताः ॥ त
स्मिन्पुरेनराःसर्वेकृष्णभक्तावसंतिहि ॥ ४३ ॥ ब्रह्मण्याःपुण्यकर्त्तारःपरदारपराङ्मुखाः ॥ स्वदारनिरताःसर्वेकृष्णपूजनतत्पराः ॥४४॥
गोविंदगाथांशृण्वंतिपुराणानितथैवच ॥ जपंतितत्रनामानिराधामाधवयोर्मुदा ॥ ४५ ॥ तुलसीमालिकाभिश्चह्यूर्ध्वपुंड्रधराद्विजाः ॥ गो
पीचंदनकाश्मीरैर्हरिमंदिरचर्चिताः ॥ ४६ ॥ श्यामबिंदुधराःसर्वेश्रीधराःकेचिदेवहि ॥ तिलकैर्द्वादशैर्युक्ताअष्टमुद्राधराःपराः ॥ ४७ ॥
गृहस्थाःशीतलांमुद्रांगोपीचंदनसंयुतां ॥ नित्यंविप्रादयोवर्णाःप्रभातेधारयंतिहि ॥ ४८ ॥ अग्निसंस्कारणार्थंतुविरक्ताःकेचिदेवहि ॥ त
प्तमुद्राधारयंतिकेचित्संन्यासिनस्तथा ॥ ४९ ॥ तस्मिन्पुरेहयःपश्यन्प्राप्तोभूद्राजमंदिरे ॥ यत्रराजतिराजातुचंद्रहासश्चचंद्रवत् ॥ ५०॥
इतिश्रीमद्गर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौकौंतलपुरगमनंनामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥छ॥ ॥छ॥ ॥
॥ गर्गउवाच ॥ ॥ समागतंयज्ञहयंविलोक्यश्रीचंद्रहासोव्रजचंद्रदासः ॥ सद्योगृहीत्वाकिलतस्यपत्रंसवाचयामासतदैवहृष्टः ॥ १ ॥ त
त्पत्रंवाचयित्वाहमहाभागवतोनृप॥ अहोपश्यामिनेत्राभ्यांपौत्रंश्रीपरमात्मनः ॥ २ ॥ केनपुण्येनपूर्वेणकृष्णतुल्यंयदूत्तमं ॥ मयानदृष्टः
श्रीकृष्णोमायामानुषविग्रहः ॥ ३ ॥ सहितःकार्ष्णिजेनाहंतस्माद्गच्छामिद्वारकां ॥ तत्रपश्यामिश्रीकृष्णंबलंप्रद्युम्नमेवच ॥ ४ ॥ उग्रसेनं
महाराजंश्रीकृष्णेनापिपूजितं ॥ इत्युक्त्वानिर्ययौराजाह्यनिरुद्धंविलोकितुं ॥५॥ गृहीत्वाचोपचारांश्चगंधपुष्पाक्षतादिकान् ॥ दिव्यवस्त्रा
णिरत्नानिगृहीत्वातुरगंचसः ॥ ६ ॥ सर्वेपुरजनैःसार्द्धंमालातिलकशोभितैः ॥ गीतवादित्रघोषैश्चपद्भ्यांराजाजगामह ॥ ७ ॥ आगतंतं
नृपंदृष्ट्वानागरैःसहितंनृप ॥ अनिरुद्धोमुदायुक्तोमंत्रिणंचेदमब्रवीत् ॥ ८ ॥ ॥ अनिरुद्धउवाच ॥ ॥ कोयंराजामहामंत्रिन्सर्वैःपुर
जनैःसह ॥ आगतोमिलनार्थंवातस्यवार्तांवदस्वनः ॥ ९ ॥ ॥ उद्धवउवाच ॥ ॥ नृपोयंचंद्रहासाख्योकेरलाधिपतेःसुतः ॥ मृतयोर्मा
तापित्रोश्चकुलिंदेनानुपालितः ॥१०॥ आबाल्यात्कृष्णचंद्रस्यभक्तस्तेनापिरक्षितः ॥ दुष्टबुद्धेःप्रधानस्यसुतांयःपरिणीतवान् ॥ ११ ॥
यस्मैकुंतलकोराजाराज्यंदत्वावनंययौ ॥ तस्याख्यानंद्वारकायांमयाकृष्णमुखाच्छ्रुतं ॥ १२ ॥ यस्मैस्वदर्शनंदातुंश्रीकृष्णोत्रागमिष्यति

उद्धवस्यवचःश्रुत्वाविस्मितोभूद्यदूत्तमः ॥ १३ ॥ गत्वानिरुद्धनिकटेचंद्रहासोजनैर्वृतः ॥ श्यामकर्णंददौप्रीतोधनानिबहुशस्तथा ॥१४॥ गजानामर्द्धलक्षंचरथानांलक्षमेवच ॥ तुरगाणामेककोटिंसुद्राणांहिसहस्रकं ॥ १५ ॥ गवयानांसहस्रंचशिबिकानांसहस्रकं ॥ धेनूनांदशलक्षंचशिञ्ञानामयुतंतथा ॥ १६ ॥ एककोटिसुवर्णानांरौप्यानांचचतुर्गुणं ॥ लक्षमाभरणानांचमाधवायददौनृपः ॥ १७ ॥ ॥ चंद्रहासउवाच ॥ ॥ नमोऽनिरुद्धायसुरोत्तमायश्रीकृष्णपौत्रायजनेश्वराय ॥ प्रद्युम्नपुत्राययदूत्तमायदेवायपूर्णायनमःपराय ॥ १८ ॥ इतिभक्तवचःश्रुत्वाप्रसन्नोमदनात्मजः ॥ संश्लाघ्यप्रददौतस्मैप्रदीप्तांरत्नमालिकां ॥ १९ ॥ चंद्रहासस्तुराजेंद्रराज्येकृत्वातुमंत्रिणं ॥ स्वपुराद्यादवैःसार्द्धंगंतुंचालंमनोऽकरोत् ॥ २० ॥ उषित्वातत्पुरेसर्वेह्येकरात्रंयदूत्तमाः ॥ प्रातःकालेययूराजंश्चंद्रहासेनसंयुताः ॥ २१ ॥ जगामह्यग्रतस्तेभ्योतुरगःपत्रशोभितः ॥ ततःसप्तवतींदृष्ट्वाह्यावर्त्तशतसंकुलां ॥ २२ ॥ तरंगैस्तटंनिघ्नंतींदीर्घवेगांदुरत्ययां ॥ नौकाभिःसंयुतांदृष्ट्वावीरःप्रद्युम्ननंदनः ॥ २३ ॥ अक्षौहिणीशतयुतोपारंगंतुंमनोदधे ॥ सपूर्वंगजमारुह्यसांबाद्यैःपरिवेष्टितः ॥२४ ॥ नावंत्यक्त्वानृपश्रेष्ठप्रविवेशनदीजले ॥ प्रथमंसलिलंतस्यांसमलंचबभूवह ॥ २५ ॥ ततःपंकद्रवाभूमिश्चित्रमेतद्बभूवह ॥ हसंतोयादवाःसर्वेविस्मयंपरमंययुः ॥ २६ ॥ अथव्रजंस्तुरंगस्तुसजगामशनैःशनैः ॥ नारायणसरोयत्रमध्येसिंधुसमुद्रयोः ॥ २७ ॥ पपौतीर्थजलंतत्रतुरगश्चतृषातुरः ॥ ततस्तत्राययुःसर्वेऽनिरुद्धाद्यायदूत्तमाः॥२८॥धर्मद्वेषकरान्नीचान्म्लेच्छान्जित्वामृधांगणे ॥ दृष्ट्वातुरंगमंतत्रस्नानंचक्रुःसरोवरे ॥२९॥ ॥ इतिश्रीगर्गाचार्यसंहितायांहयमेधचरित्रसुमेरौद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ छ ॥ ॥ छ ॥

गर्गउवाच॥ पश्यन्नृपान्महावीरानुग्रसेनतुरंगमः ॥ विचरन्भारतेवर्षेदेशानन्याञ्जगामह ॥ १ ॥ एवंविचरतस्तस्यहयस्यचविशांपते ॥ आगतःफाल्गुनोमासःसर्वेषांगृहदर्शकः ॥२॥ आगतंफाल्गुनंदृष्ट्वाअनिरुद्धस्तुशंकितः॥उवाचमंत्रिप्रवरमुद्धवंबुद्धिसत्तमं ॥ ३ ॥ ॥ अनिरुद्धउवाच ॥ ॥ चैत्रेश्रीयादवेंद्रस्तुमंत्रिन्यज्ञंकरिष्यति । वयंतुकिंकरिष्यामोदिवसाबहवोनहि ॥ ४ ॥ भूमौतुरंगहर्तारोनृपाःक्वतेनशोपिताः । तेषांचवदनामानिमह्यंशुश्रूषवेत्वरं ॥ ५ ॥ उद्धवउवाच ॥ नसंतिभूतलेशूराःगगनेसंतिवाहरे ॥ तस्माद्यदुपुरींगच्छस्वर्गद्वारांचद्वार

काम् ॥ ६ ॥ इतितस्यवचःश्रुत्वाह्यनिरुद्धःप्रहर्षितः ॥ तस्यापिवचनंराजन्नश्वाग्रेपुनरब्रवीत् ॥ ७ ॥ एवंतद्वाक्यमाकर्ण्यसर्वज्ञातातुरंगमः ॥
प्रययौद्वारकांशीघ्रंकिष्किंधांहनुमानिव ॥ ८ ॥ तस्यापिपृष्ठतःशूराद्दुद्रुवुस्तेतुरंगमैः ॥ वासुदेवैर्मनोवेगैर्भानुसांबादयोनृप ॥ ९ ॥
गृहीत्वातुरगंसर्वेबद्ध्वातंस्वर्णदामभिः ॥ सेनायामंतरेकृत्वाशंकिताःस्वपुरींययुः ॥ १० ॥ गीतवादित्रघोषैश्चनादयंतश्चदुंदुभीन् ॥ चाल
यंतश्चपृथिवींत्रासयंतःखलान्नृपान् ॥ ११ ॥ व्रजंतंयादवैःसार्द्धंतुरगंवीक्ष्यनारदः ॥ दूतवत्कलहार्थाय प्रययौशक्रसन्निधिं ॥ १२ ॥ तस्या
ग्रेकथयामासवाजिवार्तांसविस्तरात् ॥ श्रुत्वाशक्रस्तुराजेंद्रहयंहर्तुंमनोदधे ॥ १३ ॥ आययौभूतलेशीघ्रंदृष्टुंभूत्वातिरोहितः ॥ अहोवि
ष्णोर्माययाचसर्वेमुह्यंतिदेवताः ॥ १४ ॥ कुवेरब्रह्मशक्राद्याभूजनानांतुकाकथा ॥ सगत्वातत्रवृष्णीनांसेनांसर्वांददर्शह ॥ १५ ॥ प्रलया
ब्धिसमांरौद्रांवृतांशूरैश्चकोटिभिः ॥ यादवानांमहासेनामुद्भटांवीक्ष्यशंकितः ॥ १६ ॥ ययौकृष्णभयाद्राजञ्छीघ्रंशक्रोमरावतीं ॥ कृष्णदेव
स्यकृपयायुद्धस्याशांविमृज्यच ॥ १७ ॥ अथव्रजंतीचतुरंगणीभिःसेनानिरुद्धस्यमहात्मनश्च ॥ गजैरथैर्वैतुरगैर्नरैश्चरेजेमघोनःप्रतनेवस्व
र्गे ॥ १८ ॥ गजाःसर्वेपृथग्भूताःपृथग्भूतारथास्तथा ॥ पृथग्भूतास्तुरंगाश्चपृथग्भूताःपदातयः ॥ १९ ॥ अनुजग्मुर्द्वारकांतेहर्षिताःकृ
ष्णपोतकाः ॥ जंबूद्वीपस्यजेतारोलोकद्वयजिगीषवः ॥ २० ॥ अग्रेवाहंपुरस्कृत्यवादित्रैर्विविधैरपि ॥ गीतनृत्यादिभीराजन्संयुक्तास्ते
यदूत्तमाः ॥ २१ ॥ अनिरुद्धस्तुसांबाद्यैरिंद्रनीलादिभिर्नृप ॥ चंद्रहासादिभिर्भूपैःसहस्रैरभिभूषितः ॥ २२ ॥ सांबस्यानुमतेनापिचानर्त्तं
संप्रविश्यच ॥ उद्धवंप्रेषयामासद्वारकांयोजनद्वयात् ॥ २३ ॥ एवंप्रणोदितःसोपिनत्वारुक्मवतीसुतं ॥ शिबिकांशीघ्रमारुह्यहर्षितःप्रययौपु
रीं ॥ २४ ॥ यत्रास्तेह्युग्रसेनस्तुमुनिभिःपरिवारितः ॥ श्रेष्ठेपिंडारकक्षेत्रेसभामंडपभूषिते ॥ २५ ॥ वसुदेवादयोयत्ररामकृष्णादयोनृप ॥
प्रद्युम्नाद्याश्चबलिनोयज्ञंरक्षंतिनित्यशः ॥ २६ ॥ गत्वानृपसभांतत्रयादवेंद्रंप्रणम्यच ॥ वसुदेवंबलंकृष्णंप्रद्युम्नादीन्यदूत्तमान् ॥ २७ ॥
सर्वान्नत्वायथायोग्यंतेषामग्रेससंस्थितः ॥ कथयामासवृत्तांतंपृष्टस्तैर्हृष्टमानसैः ॥ २८ ॥ ॥ उद्धवउवाच ॥ आगतस्तवराजेंद्रनिर्विघ्ने
नतुरंगमः ॥ आगताश्चानिरुद्धाद्याःकुशलेनयदूत्तमाः ॥ २९ ॥ गोविंदस्यापिकृपयाचेंद्रनीलःसमागतः ॥ हेमांगदःसुरूपाचह्यागतामंडले

श्वरी ॥ ३० ॥ निर्जितस्तुबकोयुद्धेभीषणेनसमन्वितः ॥ विंदुश्चैवानुशाल्वश्चस्वपुराद्वौसमागतौ ॥ ३१ ॥ उपद्वीपेपांचजन्यबल्वलोनि
र्जितोऽसुरैः ॥ तस्मिन्युद्धेमहेशेनह्यनिरुद्धसुनंदनौ ॥ ३२ ॥ निहतौचरुषाब्येनयादवाश्चैवमारिताः ॥ तत्रगत्वात्वसौकृष्णोजीवया
मासयादवान् ॥ ३३ ॥ तस्मात्कृष्णस्यकृपयावयंसर्वेसमागताः ॥ निर्जिताःकौरवाःसर्वेभीष्मोह्यत्रसमागतः ॥ ३४ ॥ दृष्टाद्भुतवनेस्मा
भिःपांडवादुःखकर्शिताः ॥ व्रजेगोपगणाश्चैवकृष्णविक्षेपविह्वलाः ॥३५॥ आबाल्यात्कृष्णभक्तस्तुचंद्रहासःसमागतः ॥ भीताश्चबहवोभू
पाआगतास्तेभयात्तव ॥३६॥ ॥ गर्गउवाच ॥ इतिकृष्णगुणाञ्छ्रुत्वाह्युद्धवाद्यादवेश्वरः ॥ नकिंचिदूचेप्रेम्णातुमग्नश्चानंदसागरे॥३७॥
मणिहारंददौतस्मैरत्नानिचांबराणिच ॥ शिबिकावारणरथहयादीन्नुद्धवायसः ॥ ३८ ॥ ततःकृष्णस्तुभगवाञ्छीघ्रमुत्थायहर्षितः ॥ स
ख्यासार्द्धंसभायांचचकारपरिरंभणम् ॥ ३९ ॥ उग्रसेनउवाचाथगोविंदंहर्षपूरितः ॥ आनेतुंचानिरुद्धंवैगच्छश्रीकृष्णयादवैः ॥ ४० ॥ इ
तिश्रीगर्गाचार्य्यसंहितायांहयमेधचरित्रसुमेरौउद्धवागमनंनामत्रिपंचाशत्तमोध्यायः ॥ ५३ ॥ ॥ छ ॥ ॥ छ ॥ ॥

॥ गर्गउवाच ॥ ॥ अथोग्रसेनवचनाद्वसुदेवादयोनृप ॥ नेतुंविनिर्ययुःसर्वेह्यनिरुद्धंसमागतः ॥ १ ॥ गजैरथैस्तुरगैश्चशिबिकाभिर्यदूत्त
माः ॥ श्रीकृष्णबलदेवाद्याःप्रद्युम्नाद्यानृपेश्वर ॥ २ ॥ उद्धवाद्यागजस्थाश्चहयंद्रष्टुंविनिर्गताः ॥ देवकीप्रमुखानार्योमातरःकृष्णरामयोः
॥ ३ ॥ शिबिकाभिर्विचित्राभिर्निर्ययुर्नृपसत्तम ॥ रुक्मिणीसत्यभामाद्यानार्य्यःकृष्णस्यएवहि ॥ ४ ॥ शिबिकाभिर्ययुःसर्वाःसहस्राणि
चषोडश ॥ लाजानांमौक्तिकानांचकुसुमानांनृपेश्वर ॥ वर्षकर्त्र्योययुःशीघ्रंगजस्थाश्चकुमारिकाः ॥ ५ ॥ कलशैर्जलहारिण्योनिर्य
युर्जलपूरितैः ॥ सौभाग्यवत्योब्राह्मण्योगंधपुष्पाक्षतांकुरैः ॥ ६ ॥ वारांगनाश्चरूपिण्योनृत्यंकर्त्तुंविनिर्ययुः ॥ शोभिताःसर्वशृंगारैर्गाय
न्त्यश्चगुणान्हरेः ॥ ७ ॥ शंखदुंदुभिनादेनब्रह्मघोषेणयादवाः ॥ वारणेंद्रंपुरस्कृत्यगर्गाद्यैर्मुनिभिर्युताः ॥ ८ ॥ विलोकयंतःस्वपुरींपताका
भिश्चमंडितां ॥ सिक्तमार्गांगंधजलैरंभातोरणशोभितां ॥ ९ ॥ प्रदीप्तांमणिदीपैश्चवितानैर्विविधैरपि ॥ दिव्यनारीनरैर्युक्तांसुवर्णसदनैर्वृ
ताम् ॥ १० ॥ पाक्षिणांकलशब्देनधूम्रेणागुरुगंधिना ॥ शोभितांकृष्णनगरींशक्रस्येवामरावतीम् ॥ ११ ॥ इत्थंविलोकयंतस्तेप्राप्ताःशीघ्रंच

यादवाः ॥ यत्रानिरुद्धःसहयोवर्त्ततेसेनयावृतः ॥ १२ ॥ तान्दृष्ट्वाचानिरुद्धस्तुस्वरथादवतीर्यच ॥ पुरस्कृत्यहयंचाग्रेनृपैःसार्द्धंसमाययौ
॥ १३ ॥ पूर्वंनत्वाकुलाचार्यंवसुदेवंबलंतथा ॥ श्रीकृष्णंपितरंचैवतेभ्यश्चाश्वंददौपुनः ॥ १४ ॥ शुभाशिषोददुस्तेतुप्रीताःप्रेमपरिप्लुताः
॥ त्वयासाधुकृतंवत्ससर्वाञ्जित्वारिपून्नृपान् ॥ १५ ॥ आनयामासतुरगंमध्येसंवत्सरस्यच ॥ इतितद्वचनंश्रुत्वाऽनिरुद्धःप्राहसांपुनः ॥
॥ १६ ॥ कृपयातवविप्रेंद्रमार्गेमार्गेमृधेमृधे ॥ बहुभिःशत्रुभिश्चाश्वोगृहीतोपिविमोचितः ॥ १७ ॥ गुरोरनुग्रहेणैवसुखीभवतिमानवः ॥ त
स्माद्गुरुंचविधिनायथाशक्त्याप्रपूजयेत् ॥ १८ ॥ भूपास्ततःसमागत्यसमीपेरामकृष्णयोः ॥ नेमुःपृथक्पृथक्सर्वेप्रीताःप्रेमपरिप्लुताः ॥
॥ १९ ॥ सर्वान्दृष्ट्वानतान्भूपाञ्छ्रीकृष्णोबलसंयुतः ॥ चंद्रहासंचगांगेयंविंदुंचैवानुशाल्वकम् ॥२०॥ हेमांगदंचेंद्रनीलंपरिरेभेहरिर्मुदा ॥
कृष्णभक्तात्परःकोपितस्माद्भूमौनविद्यते ॥ २१ ॥ ततोनिरुद्धंजयिनंसमागतंगजेसमारोप्यकुशस्थलींययौ ॥ शौरिःप्रसन्नःकिलसर्वयाद
वैःपुत्रैश्चपौत्रैर्मुदितैर्नृपेश्वर ॥ २२ ॥ पुष्पाणांमकरंदानांवर्षंचक्रुःसुरस्त्रियः ॥ लाजानांमौक्तिकानांचकुंजरस्थाःकुमारिकाः ॥ २३ ॥
नृत्यवादित्रगीतेनब्रह्मघोषेणशोभिताः ॥ पश्यंतःसिक्तमार्गांतांपुरींपिंडारकंययुः ॥ २४ ॥ नृपाःसर्वेयदूनांचवैभवंदेवदुर्लभं ॥ विलोक्य
वैभवंस्वंस्वंगर्हयंतिचाविस्मिताः ॥ २५ ॥ यज्ञस्थलंतेददृशुर्धूम्रेणघृतगंधिना ॥ व्याप्तंब्राह्मणघोषेणह्यसिपत्रव्रतेनच ॥ २६ ॥ निरीक्ष्यत
त्रभूपालमुग्रसेनंयदूत्तमं ॥ पुरंदरसमंदांतंपुष्टंगौरंस्फुरत्प्रभं ॥२७॥ कुशासनस्थंसुभगंनियमेन्यस्तभूषणं ॥ संयुक्तंमृगशृंगेणमृगचर्मणि
भार्यया ॥ २८ ॥ कुर्वंतंपूजनंचाग्नेर्घृतगंधाक्षतादिभिः ॥ मंडपेमुनिभिर्युक्तंधूम्रेणारुणलोचनं ॥ २९ ॥ तंसर्वेचानिरुद्धाद्याःकृत्वाग्रेयज्ञ
घोटकं ॥ वाहनेभ्यःसमुत्तीर्यनेमुःप्रीताःपृथक्पृथक् ॥ ३० ॥ ततःश्रीयदुराजस्तुसर्वान्दृष्ट्वानृपान्यदून् ॥ सर्वेषामादधेमानंयथायोग्यंय
थाबलं ॥ ३१ ॥ अनिरुद्धस्ततोनत्वाशीघ्रंभूत्वाकृतांजलिः ॥ सर्वेषांशृण्वतांप्राहजंबूद्वीपपतिंनृपं ॥ ३२ ॥ ॥ अनिरुद्धउवाच ॥
एनंपश्यमहाराजइंद्रनीलनृपोत्तमं ॥ पादयोःपतितंप्रेम्णासमुत्थापयदेववत् ॥ ३३ ॥ हेमांगदंचानुशाल्वंविंदुंश्रीचंद्रहासकं ॥ एनंदेवब्र
तंपश्यचागतंतवसन्निधौ ॥ ३४ ॥ममरक्षाकरंपश्यसांबंजांबवतीसुतं ॥ रुद्रेणनिहतंमांचपश्यकृष्णेनजीवितं ॥ ३५ ॥ तथारुद्रहतंपश्य

